अस्तर पर छपे मूर्तिकला के प्रतिरूप में राजा शुद्धोदन के दरबार का वह दृश्य है जिसमें तीन भविष्यवक्ता भगवान बुद्ध की माँ—रानी माया के स्वप्न की व्याख्या कर रहे हैं। इसे नीचे बैठा लिपिक लिपिबद्ध कर रहा है। भारत में लेखन-कला का संभवतः यह सबसे प्राचीन और चित्रलिखित अभिलेख है।

नागार्जुन कोण्डा, दूसरी सदी ई.
सौजन्य : राष्ट्रीय संग्रहालय, नयी दिल्ली

नवोदययोजना

# परीवाहः

(संस्कृतकवितासंग्रहः)

बलरामशुक्लः




साहित्य अकादेमी

**Parīvāhaḥ :** Anthology of Sanskrit Poems by Balram Shukla, under Navodaya Scheme. Sahitya Akademi, New Delhi (2016), ₹ 200



प्रथम संस्करण : 2016

**साहित्य अकादेमी**

प्रधान कार्यालय

रवींद्र भवन, 35 फ़ीरोज़शाह मार्ग, नई दिल्ली-110 001
विक्रय विभाग : स्वाति, मंदिर मार्ग, नई दिल्ली-110 001
वेबसाइट : www.sahitya-akademi.gov.in
ई-मेल : ds.sales@sahitya-akademi.gov.in

क्षेत्रीय कार्यालय

172, मुंबई मराठी ग्रंथ संग्रहालय मार्ग, दादर (पूर्व), मुंबई-400 014

4, देवेन्द्र लाल ख़ान मार्ग, कोलकाता-700 025

सेंट्रल कॉलेज परिसर, डॉ. बी. आर. आंबेडकर वीथी, बेंगळूरु-560 001

चेन्नई कार्यालय

मेन बिल्डिंग, गुना बिल्डिंग (द्वितीय तल) 443 (304)
अन्ना सालइ, तेनामपेट, चेन्नई-600 018

ISBN 978-81-260-4787-1

मूल्य : दो सौ रुपए

शब्द संयोजन : क्वालिटी प्रिंटर्स, दिल्ली

मुद्रक : विकास कंप्यूटर एंड प्रिंटर्स, ट्रोनिका सिटी, लोनी, गाज़ियाबाद-2011012

तद्विकल्पैर्मषीकल्पैर्निःशेषं पूरितं मनः।
पृष्ठेषु तत्परीवाहः काव्यत्वेनोपसर्पति॥

# विषयानुक्रमणी

# पुरोवाक्

महतः प्रमोदस्यायं विषयो यद् युवसाहित्यकारस्य प्रथमपुस्तकप्रकाशनयोजनायां सुकवेः बलरामशुक्लस्य प्रथमं काव्यसङ्कलनं साहित्य अकादेमी प्रकाशयति।

बलरामशुक्लस्य काव्यं संस्कृते अभिनवं कमपि रचनासंसारं समुन्मीलयतीति न संशीतिः। वस्तुतः साम्प्रतिकः समय एव संस्कृतस्य नवीनसम्भावनाः नवीनां चायतिं रचयति, आलिखति साहित्यस्य सुविपुले फलके विच्छित्तिविशेषरम्यं छायाबन्धमनोहरं वर्णाढ्यं नवीनमालेख्यम्। सरस्वत्याः समाराधकाः सुविपुलं कृतिवितानं तन्वाना दृश्यन्ते संस्कृतक्षेत्रे। किन्तु एतेषु विरला एव भवन्ति पुण्यभाजो ये शब्दसामर्थ्येनार्थगौरवेण च साहित्यं विशेषयन्ति। यदुक्तं भारविणा—

विविक्तवर्णाभरणा सुखश्रुतिः प्रसादयन्ती हृदयान्यपि द्विषाम्।
प्रवर्तते नाकृतपुण्यकर्मणां प्रसन्नगम्भीरपदा सरस्वती॥
भवन्ति ते सभ्यतमा विपश्चितां मनोगतं वाचि निवेशयन्ति ये।
नयन्ति तेष्वप्युपपन्ननैपुणा गभीरमर्थं कतिचित् प्रकाशताम्॥

एतेष्वपि विरलेषु सुकविषु विरलतमा एव सन्ति संस्कृते कवयन्तः सन्तो ये पारसीकभाषाकाव्यमाधुरीं संस्कृतस्य व्यञ्जनैः संवलितां विधाय परिवेषयन्ति रचनापात्रे। एतादृशेषु अङ्गुल्यग्रगणनार्हेषु सुकविषु अग्रतामेति युवाऽप्यधीयानः सुविरचिताभिनवरीतिवितानः अमन्दरसझरीसन्तानः कविर्बलरामः।

अस्य रचनावचनावलीषु वक्रोक्तयः औचित्येन समन्विता अहमहमिकया परापतन्ति। कल्पना अनल्पलावण्यं किरन्ती नरीनर्ति। अयं हि शृङ्गारस्यापि शृङ्गारम् अलङ्काराणामप्यलङ्कारं कवितावनितायाः कृते विरचयति। के भावाः का नवीना संवेदना च

वेदना च लसति अस्य कवितावितान इति सहृदया प्रथमेनास्य काव्यसङ्कलनेन ज्ञातुं प्रभवेयुः।

'विद्वत्कवयः कवयः केवलकवयस्तु केवलं कपय' इत्युक्तिं चरितार्थयन्ती बलरामकवेर्भारती अग्निगर्भा शमीव शमयत्यपि दीपयत्यपि च। छन्दःसु असाधारणः खल्वस्य कवेरधिकारः। यति-लय-गतिपुरःसृतानि च्छन्दांसि अस्य काव्यरङ्गे नरीनृतति चमत्कृतिं च कामपि तन्वन्ति। साम्प्रतिके काव्ये यथा यथा यति-लय-गतयो विरलीभवन्ति, तथा तथा कविरयं समधिकतरं लययुते संसारे लयं नाययति सहृदयानां हृदयानि। अयमपरो विशेषोऽस्य कवेर्यदप्रचलितानि च्छन्दांसि साभिप्रायमनेन साधितानि।

सहलं काव्ययमुनां नवगत्या प्रकर्षयन्।
छन्दोविधानवैशिष्ट्ये बलरामो महीयते।।

एतस्य आद्यं काव्यसङ्ग्रहं रसिकसमाजाय उपहरन्तो मुदमनुभवामः। आशास्महे यत् अनतिसाधारणैर्गुणैर्विभूषितः सदर्थरत्नमण्डितः काव्यमुक्तासङ्ग्रहोऽयं परीवाहनामा बलरामेण गुम्फितः सहृदयानां कण्ठहारायेतेति।

**–राधावल्लभः त्रिपाठी**

# प्रास्ताविकम्

कविता मया बाल्यत एवानुभूयते स्म। पितृचरणानां दैनिकपूजाविधाने निरन्तरावर्तितपद्येषु आगतानिच्छन्दांसि मानसं कदा गृहं कृतवन्ति इति स्पष्टं नाभिजानामि। पितृचरणेषु स्वाभाविकी काव्यप्रतिभावर्तत,संस्कृतं प्रति गाढानुरागश्च। तदीयमेकं हिन्दीकाव्यम् अहं सर्वदैव स्मरामि यत्तेषां सुकविप्रतिभां सुनिपुणं प्रदर्शयति–

अनहोनी कौतुक देखा सखि! मैने नन्दभवन में,
परब्रह्म नाचता हँसता था धूल लगाये तन में।
देखा शशिशेखर को भी उन चरण कमल पर गिरते,
प्रतिबिम्ब बहाने नख के एकादश रुद्र उतरते ॥

परिस्थितीनां वैषम्यवशात् छात्रत्वे तैः कश्चिदध्यापयिता शिक्षकत्वे च कश्चिद् अध्येता न प्राप्तः। गार्हस्थ्यजालसंपतितमानसानां च तेषां तावान् समयोऽपि नासीद् यथा ते मामुपनिषत्कृत्य संस्कृतम् अध्यापयेयुः, तथापि आशैशवादेव तैः प्रत्यक्षतः अप्रत्यक्षतश्च संस्कृतं प्रति अनितरसाधारणं प्रेम समुत्पादितम् एव। छन्दसां स्वप्नसुन्दरः संगीतसंगतश्च लोकः प्रदर्शितः यः खलु मम संस्कृतकाव्ये बीजमजायत। गृहे च स्थितानां संस्कृतकाव्यपुस्तकानां निरन्तरं सस्पृहम् अभ्यासवशात् शनैः शनैः काव्यं प्रति लालसा वर्धिता। एवम्प्रकारेण कवनेच्छा तु समेधिता परन्तु काव्यज्ञशिक्षाया ऐकान्तिकाभाववशात् यथाभीप्सं कवितायां सिद्धिर्नावाप्ता। यद्यपि यथाकथञ्चित् तेषु दिनेषु स्तोत्रपरककाव्यानि रचयामि स्म। अत्रान्तरे मया आत्मनि उर्दूभाषां प्रति हार्दिकोऽनुरागः अन्विष्टः। ग़ालिबादीनाम् उर्दूकवितल्लजानां काव्यानि पौनःपुन्येन आस्वादितानि। अनेकानि काव्यान्यपि एतस्यां भाषायां रचितानि। अनेन प्रकारेण भूयसी रसिकता समपादि।

देहलीमागत्य मया व्याकरणाध्ययने काव्यकरणे च महती प्रगतिरनुभूता। तत्र काव्ये कारणभूतासीत् व्याकरणकाव्यादिशास्त्रेषु अप्रतिहतगतीनां अग्रजनिर्विशेषाणां श्रीमतां **परमानन्दझा**वर्याणाम् अकारणप्रेमपूरसंसिक्ता पुण्यसंगतिः। तैः शास्त्राध्ययनक्षेत्रे

विशिष्य काव्यरचनेऽहम् अनारतं निर्दिष्टः प्रोत्साहितश्चाभूवम्। तदीये महासाचिव्ये प्रवाहिताया मन्दाकिन्याः पक्षशः कल्पितासु कविविद्वद्गोष्ठीषु हार्दिकीं प्रोत्साहनामन्वभूवमहम्। अयं च काव्यकेलिः तथा वर्धितः यथा आवाभ्यां चलदूरभाषमाध्यमेन लघुसन्देशरूपेण वर्षाणि यावच् शतशः काव्यानि प्रणीतानि, यानि पुस्तकाकारेण **लघुसन्देशम्** इतिनाम्ना अचिरम् प्रकाश्यमानानि सन्ति। अस्य प्रस्तुतस्य काव्यस्यापि प्रकाशनावसरे तेन समस्तान्यपि पद्यानि दृष्टानि, शोधितानि, प्रसादितानि च। एतदनुकम्पायै हृदयेन तेषां कार्तज्ञ्यभारं वहामि भविष्यति च तेषां स्नेहाशिषः सर्वदैवेहे।

२००७ तमे वर्षे संस्कृतव्याकरणभाषाविज्ञानसम्बद्धं शोधकार्यं परिपूर्य चिरकालात् सस्पृहं संवर्धिताम् लालसां सम्भावयता मया पारसीकसाहित्यस्याध्ययने प्रवृत्तम्। तत्र दृष्टः मया कवितायाः कश्चन आश्चर्यकरः सौवर्णः संसारः। आन्तरजगतः यावता प्रमाणेन संस्पर्शः पारसीककविभिः विहितस्तावता नान्यत्र क्वापि मया लब्धः। पञ्चवर्षाणां निरन्तरमुपासनेन पारसीकसरस्वती अनुकूला सती मां रसिकताधिकतया समवर्धयत्। इदं पारसीकप्रेम तथा वर्धितं यथा मया पारसीकभाषायां काव्यानि विरचयितुमारब्धानि। तेषां संग्रहोऽपि ईरानदेशतः **इश्क़ो आतश** इत्यभिख्यः प्रकाशितः। अनेकशः काव्यप्रसङ्गे ईरानदेशेऽपि अहम् आहूतः। मया पारसीककवीनां छायाः स्वाभाविकतया स्वीयरचनास्वपि आरोपिताः। किञ्च भूयसीनां पारसीककवितानां संस्कृतेनानुवादोऽपि विहितः, यः खलु **यावनी पावनी भाषेति** शीर्षकेण संगृहीतः अन्यदा च कदाचित् प्रकाशतामेति।

संग्रहेऽस्मिन् स्वयमेव शङ्के यद् भवेयुः भूयांसि काव्यव्याकरणसम्बद्धानि स्खलितानि परन्तु महतः सन्तोषस्येदं स्थानं यदेताः कविताः स्वाभाविक्यः सत्याः च सन्ति। भावोद्रेकादृते भूयसीनां कवितानां नाविद्यत कश्चिदन्यः हेतुः। आदौ **प्रणामपद्धतौ** बहवः बाल्यावस्थारचिताः कविता राजन्ते। **शृङ्गारागारे** संकलितेषु काव्येषु यत्र तत्र पारसीकप्रभावः स्फुटं द्रष्टुं शक्यः। शान्तादिरसान् उर्वरितान् संगृह्णता **विविधविषयाः** कल्पिताः। तत्तत्प्रसङ्गेषु विदुषः प्रति हार्दिकोपकृतिज्ञानावेदनार्था याः कविता हृदयाद् बहिरायातास्ता **पण्डितप्रशंसाविभागे** निक्षिप्ताः। मन्दाकिनीसंस्कृतविद्वत्परिषदायोज्यमानासु संगोष्ठीषु प्रयत्नसाध्यानि समस्यापूर्ति-काव्यानि **समस्यापूर्ति**संभागे स्थानं लब्धवन्ति सन्ति। सर्वेभ्योऽप्यवशिष्टानि स्फुटकानि काव्यानि **मुक्तकच्छायायां** संगृहीतानि। जीवनस्य विविधक्षणेषु कविताक्षमा ये भावाः समुदिताः तेषाम् त्रिशताधिकानामनुष्टुभाम् आर्याणां च संग्रहः **सुश्लोकसंग्रहे** कृतः।

काव्यस्यास्य संग्रहणे प्रकाशने च सर्वथा हेतुभूता गुरुवर्या रसिकशिरोमणयः आलोचकप्रवरा राष्ट्रियसंस्कृतसंस्थानस्य कौलपत्यं सुशोभितवन्तः श्रीमन्त आचार्या

**राधावल्लभत्रिपाठिवर्या** नितरां प्रणम्याः। केषाञ्चन पुरातनपुण्यानां विपाकादहं तेषां कृपावर्षिणोर्नयनयोरापतितः। अस्मदीया विगुणाऽपि कविता श्रीमद्भिः अनेकधा सबहुमानं सम्भाविता तस्याः प्रकाशनार्थं प्रोत्साहना च प्रदत्ता। विशिष्य पारसीकानुवादात्मिकाः कवितास्तैर्बहुमता अभूवन्। ततः परम् अतितरां प्रेरितेन सता मयापि स्वकीयानाम् इतस्ततः विप्रकीर्णानां कवितानां संग्रहः कृतः। अनेकानि नवानि काव्यान्यपि विरचितानि। एतस्य सर्वस्य फलमेष प्रकृतः संग्रहः। एतादृशाकारणकारुणिकतासंभृतानां कृतवेदितावेदनार्थं मे तनुवाग्विभवस्य शब्दाः असहाया भवन्ति। **पुरोवाचा** संग्रहमेतं पुरस्कृतवतां तेषां चरणद्वयं संगृह्णामीत्येतावन्मात्रं मे वैभवम्।

संग्रहस्य संकलनानन्तरं मया विद्वांस उपाश्रिता यथा ते एतद्गतं गुरुलाघवं वदेयुः। सर्वैरेवाहं सस्नेहं प्रोत्साहितः। मम मातृनिर्विशेषा निर्देशिकाः शास्त्रमूर्तय आचार्या **दीप्तित्रिपाठिवर्या** राष्ट्रियपाण्डुलिपिविभागेऽहर्निशं व्यापृताः सत्यः अपि एतं संग्रहं करुणापूरतरङ्गिताभिर्दृग्भिः पावयित्वा मामुपकृतवत्य इति मामकं सौभाग्यमेतत्। वैयाकरणतल्लजा महामहोपाध्याया आचार्या प्रखरकवयित्री **पुष्पादीक्षित**महोदया सदयमेतं संग्रहं वीक्षितवती इति तां प्रति कृतज्ञतां प्रकटयामि। त्रिवेणीकविभिस्तत्रभवद्भिः सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य कुलपतिचरैः आचार्यैः **अभिराजराजेन्द्रमिश्रैः** अवलोकनसमकालमेव संग्रहस्यैतस्य कविताद्वयं साहित्याकादमीतः प्रकाशमायास्यति स्वीये आधुनिकसंस्कृतकाव्यसंग्रहे स्थापयित्वा अहं स्वं प्रत्युत्तमादरो विहित इति कृत्वा तान् प्रति बहूनि धन्यतावचांसि व्याहरामि। सेण्टस्टीफनमहाविद्यालये निरन्तरं विद्योपासने संलग्नैः गुरुवर्यैः **आशुतोषदयालमाथुर**महोदयैः सोत्साहं संग्रहमवलोक्य अनेकस्थलेषु अहं निर्दिष्टः तदर्थं तेषामुपकारभारान् शिरसा वहामि। अस्माकं गुरुवरः **ओमनाथबिमली**महाशयैः सुनिपुणमेतद् दृष्ट्वा आशया अस्य विशदीकृता संग्रहस्य इति तेभ्य आभारभरं निवेदयामि। देहलीविश्वविद्यालयस्य संस्कृतविभागे वर्तमानैः काव्यादिशास्त्रमर्मज्ञैः गुरुकल्पैः श्रीमद्भिः **भारतेन्दुपाण्डेयवर्यैः** प्रत्यक्षरमेष संग्रहोऽवलोकितः भूयस्सु स्थलेषु च काव्यानि शोधितानि नवीकृतान्यपि। तान् प्रति ममाधमर्ण्यं स्थास्यत्येव। बेङ्गुलूरुस्थः अष्टावधानी सिद्धकविः व्यवसायेन मनश्चिकित्सकः **शङ्करराजारामवर्यः** अपि करुणया सर्वमपि काव्यसंग्रहमवलोकितवन्तः इति स नितरां धन्यवादार्हः। आधुनिकमन्तर्जालपरीतं युगं तु संस्कृतस्य कृतेऽप्यमृतायते। विदेशस्था अपि विद्वांसोऽस्मिन् काले सदेशस्थाः क्रियन्ते। एतासां कवितानां अन्तर्जाले प्रसारणेन कापि काव्यगोष्ठी आरचितावर्तत। तत्र काव्यानां रसनं, षाणामाप प्रत्युत्तरकाव्यरचनं च गुरुभिः कविमित्रैश्च कृतानि। तेषां प्रतिस्पन्दकाव्यानि सौन्दर्याधिक्यात्, प्रकरणभङ्गभिया अन्यत्रस्थापनानर्हत्वात् पादटिप्पणीषु तत्तत्कवितानामध

एव कवीनां नामभिः उद्घ्रियन्ते। अनेन न केवलं रसिकानामतिरिक्तरसलाभो भविता अपितु एतत् संस्कृतकवितायाः परम्परा अधुना उज्जीवतीति निदर्शनायाप्यलं भविष्यति। एतदतिरिच्य यानि अपि मम ज्ञाताज्ञातप्रोत्साहनस्रोतांसि गुरवः मित्राणि च अभूवन् सर्वाण्यपि तानि प्रति आवर्जितेन शिरसा कृतज्ञतां प्रकाशयन् **परीवाह**मेतं स्वकीयकर्मयोगमयेन आचरणेन ममादर्शभूतेभ्यः, यदपि मयि स्पृहणीयं वर्तते सर्वस्यापि कारणभूतेभ्योऽस्मत्पितृचरणेभ्य उपायनीकुर्वंस्तेषामनुकूलतां याचमानः प्रसीदामि—

*वसन्तपञ्चमी 2015*

सरस्वतीसमुपासनैकव्यसनः

**बलरामशुक्लः**

# मद्गुरुः श्रीजगद्गुरुः

विभाति जगतां गुरोः पदनखाम्बुजाभाकुलं
समस्तजननार्जिताखिलमलान्धकारान्तकृत्।
अधूमकमवर्तिकं सततदीप्तिमालोज्ज्वलं
न चैव चलिताचलैरपि मरुद्भिरीषद्भ्रमम्॥

अनन्यशरणागतिर्भवति दक्षिणा यत्कृते
रहस्यमखिलं क्षणादुचितभाजनं बोधयन्।
नवीनजलदप्रभो नवलपुष्पमालागलो
गुरुर्मम वरासने लसति शेमुषीमुद्रया॥

चतुर्मुखमुखाम्बुजे ननु निवेशिता येन वाक्
श्रुतिप्रततिराततता जगति यस्य प्राणानिलैः।
मदीयकवितापि तं मुदिरसुन्दरं सेन्दिरम्
विहाय विहरेत् परैः कुटिलबन्धकीवत् कथम्॥

अहंकृतिरपाकृता प्रकटिता समत्वप्रभा
पुनर्भवविनाशिनी प्रवरशेमुषी देशिता।
धनञ्जयमिषाद्यतः सकलसंसृतिः शिक्षिता
निरन्यविषयं श्रयेत्तमतिरिच्य कं गौरवम्॥

त्वदीयवदनेन्दुतः सुखितलोकचित्ताम्बुधेर्
निरर्गलगलत्सुधा सुरसरित्समा पावनी।
जनुर्मरणहारिणी व्रजतु कापि गीताकथा
गुरो! गरिमपूरिता मम कृते गुरुग्रन्थताम्॥

भवन्तु ननु शाब्दिकाः पदपरायणाः पारगा
ग्रहग्रहणपण्डिताः सकलशास्त्रमीमांसकाः ।
भयङ्करभवान्तकानुपदिशन् विधीनच्युत
त्वमेव गुरुमण्डले धुरि भवन् सदा शोभसे ॥

ममत्वपरताश्रिताः प्रबलरागरोगावृता
विकत्थनपराः परं परगुणेषु वाचंयमाः ।
भजन्तु कथमच्युत श्रितसमस्तशास्त्रान्त हे
कलामपि च षोडशीं तव, गुरूयमाणा इमे ॥

अदभ्रदयया द्रुतो सकलदर्शनेषु श्रुतोऽ
मलेषु प्रतिबिम्बवत् सकलशास्त्रसंक्रान्तिकृत् ।
गतस्मयमयामयस्त्वमिव चेद्गुरुर्दृश्यते
व्रजानि शरणार्थितामहममुष्य सर्वात्मना ॥

भयङ्करभवार्णवेऽसुखसुखोर्मिमालाकुले
गतः खलजलभ्रमं प्रबलनक्रचक्रार्दितः ।
असत्यगुरुवाग्विषैर्विगतचेतनोऽहं विभो
त्वदीयपदपङ्कजं दृढतरिं तरीतुं श्रये ॥

# कृष्णचन्द्रमुखचन्द्रिरे

सर्गपालनविसर्गकारणं
ब्रह्म चेतसि विभातु यावता।
आशिषां प्रवचनानि तन्मिथोऽ
त्रैहि मित्र वितराव तावता॥

दुःखसौख्यसमुदायदायता
याति याऽतिसहसा बतात्मनि।
तत्समागमनिरोधकारणं
ज्ञातुमेव समयं नयावहे॥

नश्यतां हि जगतां जवेऽप्यरे
कञ्जपत्रगतबिन्दुचञ्चले।
स्थीयते कथमहो नु निष्ठया
नो पुनः स्थिरतरे घरात्मनि॥

कोट्यहस्करविभासमानता
यस्य, नैव स कथं विलोक्यते।
सर्वतः समुदिता तमस्विनी
दृश्यते कथमुलूकलोचनैः॥

सद्गताः कथमसद्युजो वयं
चिद्युजः कथमचिद्युजः सखे।
दुःखसागरनिमग्नमानसाः
स्मः कथं नु सति सत्सुखात्मनि॥

एहि तच्चरणधूलिसङ्गुषां
स्वत्विषाऽखिलमनस्तमोमुषाम् ।
तत्पवित्रपदपद्ममीयुषाम्
आश्रयेऽस्तु गमनं महात्मनाम् ॥

तद्गुणानुकथनप्रभावतो
ज्ञानभास्कर उदेतुभास्करः ।
मायिकी मृतिमियात्तमस्विनी
वैपरीत्यप्रतिभासदुर्भगा ॥

यत्र यत्र सुखमीक्ष्यते मनाक्
तत्र तत्र विषयेषु धावसि ।
तन्निधौ च ननु न प्रवर्तसे
माधवाङ्घ्रिकमलद्वये कथम् ॥

नारदादिबुधवृन्दवन्दितम्
इन्दिराकरसरोजलालितम् ।
विष्णुपादकमलद्वयं सखे!
गम्यमस्तु ननु सम्यगेव नः॥

भीतिपूरितदिगन्तरेष्वपि
सान्त्वयन्त्युपनिषद्गवी मया ।
या श्रुता परममोददायिनी
सैव साम्प्रतमतोऽनुगम्यते ॥

उज्ज्वलश्रुतिसुधाभिवर्षिणि
भक्तखेचरचयाभिशोभिनि ।
कृष्णचन्द्रमुखचन्दिरे चिरात्
चित्तमेतदिह मे चकोरतात्॥

कृष्णचन्द्र! तव पादपङ्कजे
स्याद्रतिर्यदि सुनिश्चलाऽमला ।

बम्भ्रमिष्यति न मे ससम्भ्रमं
जागतेषु विषयेषु मानसम्॥

कृष्णचन्द्र! भवपङ्कसङ्कुलम्
बालमप्रभवतां धुरि स्थितम्।
वीक्षसे न च करोषि मां पितः!
सद्य एव कथमङ्कसंस्थितम्॥

# आनन्दानां कन्दम्

आनन्दानां कन्दं त्वमेव नन्दात्मजासि सत्यमिदम् ।
त्वदृते तु तुच्छभूतं सर्वं शतशः श्रुतं श्रुतिषु ॥

संसारे सुखलेशोऽपि योऽस्ति स त्वद्विकारभूतत्वात् ।
आपातमात्रकान्ते प्रान्ते परितापतान्तेऽस्मिन् ॥

न भवति तथात्र शक्तिर्ज्ञानेषु प्रपञ्चमिथ्यात्वम् ।
प्रसभं यथा प्रवच्मः त्वदृतेऽनृतमस्ति सर्वमिदम् ॥

सुदृढं यथा वदामस्त्वमेव सर्वस्वमस्मदीयोऽसि ।
मायाविलसितमन्यत्तादृग्भवतात्प्रतीतिरपि ॥

त्वत्पदसरोजलाभान्मनीषितं मास्तु दूषितं कामैः ।
करणानि मा विकुर्युर्जातु तदुपलभ्य विषयविषम् ॥

कर्णादिककरणानामेवं विषया भवन्तु तव विषयाः ।
व्यवधानाभिभवाभ्यामग्राह्याः स्युर्यथापरे सर्वे ॥

याचामि वरमनन्यं न पूरयेथाः कथञ्चिदपि नाथ! ।
रुदतापि याचितः संस्ता वाञ्छा यास्त्वदन्याः स्युः ॥

योगिन इव जायेरंस्तव विरहे मम नु नीरसा विषयाः ।
कर्तव्यमिति हि कुर्यां भोक्तव्यं चेति भुञ्जीय ॥

वार्ता तवास्तु वृत्तिस्त्वदस्तु मैत्री त्वयैव मे भूयात्।
त्वां पश्यामि वदाम्यथ तव चिन्तनमस्तु मे सततम् ॥

मयूरपिच्छमुकुटा वनमालाविभूषिता।
मूर्तिर्मायापते दृग्भ्यां जातु नैवापयातु ते॥

# बदरीशो विजयते

जयति बदरीनाथो देवस्त्रिलोकपतिः, पतिर्
जलधिदुहितुः, शैलोत्तुङ्गोत्तमाङ्गविराजितः।
अनुचरनरासङ्गे नित्यं तपोव्रतमाचरन्
सकलजनतासौभाग्येनावतारितविग्रहः॥

पुनरपि हरे कर्तुं गङ्गां पवित्रतराम्भसं
हिमगिरिशिरोमूले मन्ये त्वया निहितं पदम्।
कलिरपि तथा घोरातङ्को निजानघविग्रहं
प्रकटितवतानुक्रोशैस्तत्त्वया नु कृतं कृतः॥

सकलसुरतारूपः शैलोत्तमाङ्गवरासनः
प्रकृतिसहितश्छत्रैर्युक्तस्तुषारविकारकैः।
प्रणतचरणो नित्यं लोकैरुपायनपाणिभिर्
भुवननृपता विश्वत्रातुस्तवैवमतिस्फुटा॥

घटयसि यदा स्वीयद्वारे कपाटपरम्परां
हिमततिहतिव्यालुप्ताङ्गस्तदा सकलो जनः।
विकसति स एवायं दृष्टे पुनस्त्वयि माधव!
भुवनकमलोद्बोधे सूर्यो भवान् कमलापते!॥

---

1. स्फुरति पुरतस्तावद्भावोद्धुरा मधुरोज्ज्वला सरसकविताश्रेणीबन्धो समस्तसचेतसाम्।
स्रुतनवमषी त्वल्लेखन्याकृतिर्भुवि दीपिका विलसति सखे यावद्वाणीपटाञ्चलरक्षिता।
—श्रीमतां शङ्कर‌राजारामाणाम्

# श्रीशिवस्तुतिः

शीतांशुशेखर! युगक्षयकृद्! दयालो!
स्वीयेप्सितं विषमलोचन! लब्धुकामः।
त्वद्विश्ववन्दितपदाब्जयुगं श्रितोऽस्मि
मां पश्य दक्षमखनाशनदक्ष! देव ॥

कल्पान्तकार्यपि भवाञ् शिवनामधेयः
त्वं कामिनी सहचरोऽपि महांस्तपस्वी।
नाथ! त्वदीयचरितं नितरां विचित्रं
क्षुद्रा मदीयधिषणा क्षमते न वेत्तुम् ॥

त्वद्वृत्तवर्णनविधौ विफला हि वेदा
वाचंयमत्वमखिला अगमन्नगम्य!।
वाक्चित्तयोस्तव कथां नितरामतीतां
हृत्तोषणाय कथयामि विभो तथापि—॥

सम्प्राप्तयोगविधिविघ्नविनाशनाय
त्वद्भालचत्वरचलन्नयनानलेऽसौ।
पुष्पायुधः पुरविपक्ष! तवानभिज्ञो
जातो हविस्सुमनसां नयनाग्र एव ॥

भक्त्याऽतिनिर्भररसे रचिते महिम्नः—
स्तोत्रेऽकृथा हर पुनस्स्वपदासनस्थम्।
निर्माल्यलङ्घनसदोषमपि स्वभक्तं
श्रीपुष्पदन्तमतिपुष्पमनोज्ञवाचम् ॥

श्रीमन्नयुग्मनयन! त्रिपुरार्तिदायिन्!
भक्तावलीषु करुणावरुणालयस्त्वम्।
त्वन्नामकीर्तनपरं किल लीलयैव
शम्भो! मृकण्डुतनयं शमनादरक्षीः॥

भक्त्याभिवन्दनपरः परमेश्वरं त्वां
स्मृत्वा सकृत् कृतिमुखे कविकालिदासः।
श्रीराघवेन्द्रकुलवर्णनवर्णनीयं
काव्यं चकार रघुवंशमुदारकीर्तिः॥

पादाश्रितस्तव शलातुरलब्धजन्मा
ढक्कानिनादितमवाप्य स सूत्रजालम्।
शब्दानुशासनवरं रचयाञ्चकार
सर्वत्र पाणिनिमुनिः प्रथिताभिधानः॥

केचिद्वरं वरफलं वरलोकवासं
याचन्ति, तच्च परिपूरयसि प्रसन्नः।
सम्पूर्णभौतिकसुखातिशयाय किन्तु
याचेऽहमच्युतपदाम्बुरुहेऽतिभक्तिम्॥

याच्ञा परा स्मरविनाशन! नास्ति चित्ते
श्रीकृष्णचन्द्रपदपङ्कजलाभतो मे।
त्वां संगतो गिरिश! शक्तिपतिं समीक्ष्य
स्थाणौ त्वयि स्थितवति क्व नु यातु लोकः?॥

लोकागमोक्तविधिभिर्नितरां विहीने
संसारभीमभुजगैः परिदश्यमाने।
पीयूषपूरितविलोकनदक्ष! दक्ष–
ध्वंसिन्! मयीह दयितां दृशमाशु देहि॥

हे कामवाम! परिपूरय कामनां मे
त्वद्द्वारि देव! वृषकेतन! संस्थितोऽहम्।

अर्थी, न मोघविषयोऽस्मि निवर्तनीयः
प्राप्तो हर प्रथमतः परमाशयैषः॥

भक्तपङ्क्तिसकृपाक्षिभिस्त्रिभिर्
वह्निचन्द्रमिहिरस्वरूपिभिः।
ज्ञानभक्त्यननुरक्तिदायिभिः
प्रेक्ष्य मां कुरु कृतार्थमीश्वर! ॥

# मद्दृष्टिमार्गपथिकः

वंशीधरो मुखमरुत्क्रमप्रेरणेन
सम्पूर्य वेणुविवराणि वरं तदन्तः ।
उत्पादयन् कमपि कर्णरसायनोद्घं
मद्दृष्टिमार्गपथिको भविता कदाचित् ॥

कुन्तीसुतं स्वजनमारणभीतिभीतं
जन्याजिरे च भवता गदिता सुगीता ।
सन्न्यासकर्मभजनग्रथिता प्रसिद्धा
मद्दृष्टिमार्गपथिको भविता कदाचित्॥

रासं रसालयमहो रचयन् रमेशः
सार्धं सखीभिरथ कार्तिकपौर्णमास्याम् ।
नन्दन्ति यत्र सुकृताप्तमहानुभावा
मद्दृष्टिमार्गपथिको भविता कदाचित्॥

मातुः कराग्रगतदण्डविलोकनेन
भीतो रुदन् मृददनादतिकम्पमानः ।
उद्दामकालकरदण्डनिवारकोऽसौ
मद्दृष्टिमार्गपथिको भविता कदाचित्॥

वृन्दावने सुरभिपालकबालकानाम्
उच्छिष्टमेवमनुरागवशाद् य आदत् ॥
ब्रह्मादयो बुबुधिरे न यथा, स देवो
मद्दृष्टिमार्गपथिको भविता कदाचित् ॥

गोवर्धनं गिरिवरं सुखवर्धनो यो
गोपावनाय निजसव्यकरे दधार।
गोत्रच्छिदः स मदमेघमहाप्रवातो
मद्दृष्टिमार्गपथिको भविता कदाचित् ॥

कंसं जघान भगवान् परपीडकं यः
कारादमूमुचदथो पितरौ प्रबद्धौ।
मातामहं नृपपदेऽभिषिषेच योऽसौ
मद्दृष्टिमार्गपथिको भविता कदाचित् ॥

यस्याङ्घ्रिपङ्कजपरागरजोऽस्ति शक्तं
हर्तुं मनोमलिनतां स महानुभावः।
राधाङ्गसङ्गतिविलीननिजाङ्गवर्णो
मद्दृष्टिमार्गपथिको भविता कदाचित् ॥

यद्रूपदर्शनजलं शमयत्यशेषं
संसारभीमवनलग्नमहादवाग्निम्।
पीयूषवर्षणपरो मुखचन्द्रबिम्बाद्
मद्दृष्टिमार्गपथिको भविता कदाचित् ॥

यन्नामकीर्तनपरा मनुजास्तरन्ति
प्रोत्तालवीचिविचितं भववारिराशिम्।
क्षुद्रार्भका इव च गोष्पदपङ्क्तिमाराद्
मद्दृष्टिमार्गपथिको भविता कदाचित् ॥

त्वदीयपादाम्बुजसेवनात्परा
न मेऽस्ति वाञ्छा व्रजराजनन्दन।
ददस्व मे तद्यदि दातुमीशिषे
न विद्यतेऽधोक्षज! मेऽन्यकामना ॥

मनस्तटाके प्रतिबिम्बितास्तव
छटा न नश्यन्तु विचारवीचिभिः।
यतस्तथा चित्त! विचार्यते कथम्
त्वया महाश्चर्यसमन्वितोऽस्म्यहम् ॥

दयिताविरतं समानता—
सहितः स्पष्टतयाऽस्युपस्थितः।
न तथापि निरीक्षितोऽस्यहो
किमतः स्यात्परमा विडम्बना ॥

# वाणीस्तवनम्

विबुधवन्दितपादसरोरुहाम्
अभयदां जडतादुरितापहाम्।
करसुशोभितशोभनवल्लकीं
सुवरदां प्रणतोऽस्मि सरस्वतीम् ॥

जननि! हे निगमागमवन्दिते!
सकलशास्त्रनिसर्गगतिप्रदे!।
स्वशुभवाद्यनिवारितमूढते!
नमति ते पदयोरयमल्पधीः ॥

जननि! ते चरणे शरदम्बुजे
हरिहरद्रुहिणादिसुरार्चिते!।
करुणया मिलतो ननु चेत्तदा
भवभवं नु क इच्छति वैभवम् ॥

तवकृपालवतो ह्यतिनीचधीः
प्रथमकाव्यकरो ननु लुण्ठकः।
मुनिवरो वरपाशभृतस्सुतो
रघुपतेश्चरणाम्बुजसेवकः ॥

पुलिनप्राप्तजनिर्मुनितल्लजः
कृतसमस्तपुराणकदम्बकः।
तव दयाकलया परया परे!
जगति विश्रुतकीर्तिरभूदसौ ॥

तव पदाम्बुजभक्तिबलान्वितोऽ
ध्युषितपादपकर्तन उद्यतः।
जडमतिः कवियूथमुखोऽभवत्
किमु प्रमाणमतो भविताऽधिकम्॥

तव पदाम्बुरुहं प्रणते सति
जननि! हंसविमानविराजिते।
असुलभं जगतीह न किञ्चन
तदपि तेऽस्मि कृपालवलोलुपः॥

व्रजजनार्तिहरे जगदीश्वरे
यदुपतौ जितकेशिप्रलम्बके।
व्रजविहारितकीर्तिकुमारिके
तव तथा चरणेषु भवेद्रतिः॥

मम हृदीश्वरि! कुत्सितपातकैः
कृतमलं शरणं खलहारिणि!।
क्वणनकृत्यसमापितदुष्कृतम्!
कुरु सुवल्लकियुक्तभुजान्विते॥

क्व खलु यामि महेश्वरि! चेत्तव
न मिलिता चरणाम्बुरुहद्वयम्।
इति विचिन्त्य कृतासितनाशिनि
कुरु कृपामकृपामथवा मयि॥

त्वादृश्यां शेमुषीमत्यां बुद्धिशून्योऽस्ति मादृशः।
सम्यग्जानासि हे मातः! किं कर्तव्यमतः परम्॥

# हरिनर्तनम्

कुन्दसुन्दरदन्तवन्दितमाननं ललिताधरम्
कोटिकामकदम्बकैरभिनन्दितं कलितादरम् ।
चारुचन्द्रकसञ्चितं परिवञ्चिताखिलचारुतम्
मन्मनोऽत्यधिकं हरत्यधिमानसे मम राजितम्॥

खर्विताखिलगर्विताभलसौरभं धृतमारुतं
वंशवेणुविनिद्ररन्ध्रविनिर्गलद्रससंस्तुतम् ।
इन्दुसुन्दरमिन्दुवंशधरस्य तस्य सदाननम्
मन्मनोजमयं मनस्तृषितं चकोरति सन्ततम्॥

पीतमस्ति तदम्बरं मदभीष्टवर्षुकमम्बरं
रक्तमोष्ठयुगं भवत्यनुरागिमानसरञ्जकम् ।
श्यामिकास्ति तनुच्छवौ करुणानवाम्बुधराकृतिः
कालवालभरः कुहूकलिताखिलाविलसंस्तुतिः ॥

पाण्डुजातिहितोऽप्यपाण्डुतयान्विताऽखिलविग्रहः
शृङ्खलासु धृतोद्भवोऽपि विशृङ्खलीकृतमानसः ।
कृष्णवर्णयुतेन येन वलक्षितं भुवनत्रयं
तेन चित्रचरित्रितेन सुरक्ष्यतेऽत्र जनोऽप्ययम् ॥

# तव स्मृतिः

दिनान्यभद्राणि तव स्मृतिं विना
नयामि न्नारायण! यानि तानि तु।
अघावलीभिर्जनितानि भस्मताम्
अघावलीनां जनकानि यान्तु मे ॥

गणाः क्षणानां भवतः स्मृंतिं विना
गता, न गच्छन्तु यमेन गण्यताम्।
यतो हि सर्वं भवतोऽन्वयं विना
त्वजीवनिर्जीवनमेतदास्त मे ॥

तव स्मृतिर्वक्षसि चन्दनोक्षणं
दृशोः प्रदेशेऽमृतवर्तिकाऽञ्जनम्।
तनौ बिसं, मामककर्णयोर्युगे
सरस्वतीहस्तविमृष्टवल्लकी ॥

तव स्मृतिः पौषसमा तपच्छुचौ
तुदद्दिनेशे दिवसे च कौमुदी।
जगद्दवाग्नौ ज्वलिते समन्ततोऽ
प्यनन्तसौन्दर्यसुशोभिवाटिका ॥

तव स्मृतिश्चन्दनपल्लवास्तरः
सुरापगायां सुचिरं निमज्जनम्।
सुसूक्ष्मरूपैर्हिमरश्मिरश्मिभिः
विनिर्मितं निर्वृतिदं च कञ्चुकम् ॥

यथा च यष्टिः प्रवयःकरेऽर्पिता
यथा शिशुः स्यात्पितुरङ्कनिर्वृतः।
यथा सती स्वीयवरस्य वक्षसि
तव स्मृतौ मे मनसस्तथा गतिः ॥

यथारुणः पूर्वदिगङ्गनामुखं
यथा शशी रात्रितनूमनूनभाः।
यथा प्रदीपस्सकलं निवेशनं
तथा स्मृतिस्ते हृदयं प्रकाशयेत् ॥

यथा च विद्युज्जलदान्धकारितं
जगत् स्फुरन्त्येकपदे प्रकाशयेत्।
तथा प्ररूढाघमलीमसाधिके
तव स्मृतिर्मे मनसि प्रकाशताम् ॥

विहीनचन्द्रा रजनी जनिष्यते
दिनं दिनेशाद्रहितं भविष्यति।
अमन्त्रपूताकृति सन्ध्ययोर्युगं
मनस्त्वदीयस्मृतिभिर्विनाकृतम् ॥

# जय जय देवगिरे

समनिगमागमधारिणि! शुभकारिणि! ए
जनजनवदनविहारिणि! जय जय देवगिरे!।

मुनिमनसामपि मोहनकारिणि! तारिणि! ए
सुन्दरतरपदचारिणि! जय जय देवगिरे!।

कविकुलकोकिलकोमलनादनिनादिनि! ए
कर्कशतर्कविभाविनि! जय जय देवगिरे!।

पाणिनिपाणिनिरूपितरूपसुशोभिनि! ए
वररुचिवररुचिमोदिनि! जय जय देवगिरे!।

प्राकृतप्रकृतिविकासिनि! पालिप्रकाशिनि! ए
स्फुरदवहट्टनिवारिणि! जय जय देवगिरे!।

दलदमलाम्बुरुहप्रभयौवनमम्ब! पदे
तव निदधे निधिदायिनि! जय जय देवगिरे।

# अतीन्द्रियता[1]

हृदन्तस्तज्ज्योतिस्तपतु तपनाभाविहसनं
यदक्ष्णो राहित्येऽपि समविषयान्पश्यतुतराम्।
अदूरे दूरे वा व्यवहितवपुर्वस्तुनि पुनर्–
दिशानां कालानामिदमविषयोऽबाधितगति॥

ममाभ्यर्णे कर्णौ विरतिविरतौ तौ विलसतां
नभोमात्रारूपावुपधिविगतौ तीर्णविकृती।
विकृत्ते शष्कुल्यौ श्रवणविवरौ शोफभरितौ
यदि स्यातां, ध्वानाध्वनि तदपि मेऽवञ्चितगतिः॥

रसज्ञा चेदज्ञा भवति कटुकाम्लादिकरस–
प्रसाराणां षण्णां नहि भवति मे हानिरियता।
रसो यो सर्वेषां सततसुगृहीतोऽन्तरगतस्
तदीयं माधुर्यं करणनिरपेक्षं विजयताम्॥

नसोर्न स्यान्न स्यात्पटु पुटमिदं गन्धहरणे
मदीयं, किं छिन्नं भवति मम वा, मन्मनसि चेत्।
अनाघ्रातानन्ताशयगतसुगन्धाधिकतरो
मुनीनामप्यन्तर्हरपरमगन्धः प्रवहति॥

---

1. प्रतिभानतृतीयेक्षणशम्भो स्तम्भोऽसि कवनभवनस्य।
अयमपि सन्दर्भस्ते गभीरगुम्भो विजृम्भते सुतराम्।।

(कविराजशंकरराजारामस्य)

मदङ्गे जायन्तां शिशुयुवजराजीर्णगतयो
नयन्तामन्ते वा मम तनुतनूमन्तकजनाः।
शरीराणां कामं भ्रमयतु च मां हेतुप्रकृतिस्
तुरीयं मे रूपं सततपरिपूर्णं विजयताम्॥

# प्रतिनिधिसपर्या

इयं तनुस्तत्पदयोर्विशीर्यतां
यदुत्तमाङ्गं पदयोस्तवानमेत् ।
स्वकीयजीवं प्रददे करत्वतस्
त्वदर्चने मीलयते करद्वयम्॥

त्वदीयमार्गं चलितं पदद्वयं
ममास्तु तीर्थास्पदमम्बुजेक्षण! ।
अमुष्य नाम्ना वदनं सुपूर्यताम्
त्वदीयनाम्ना मुखरं च यन्मुखम् ॥

तदाभिरूप्यं बत वर्ण्यतां कथं
त्वदीयरूपप्रवणं हि यन्मनः ।
प्रमग्नचित्तस्तव यः पदाम्बुधौ
तदीयभाग्यं कथमुन्नयेज् जनः॥

समन्ततः पश्यति यो हरेर्वपुस्
सरित्समुद्रादिषु रोदसीतले ।
अनन्यभावेन मनो निरीक्षतां
निरस्तसर्वप्रसरं तदुन्मुखम् ॥

अमुष्य विष्णोर्भजनप्रभावतः
प्रभायुतं गात्रमपाकरोतु मे ।
मनोऽन्धकारं, रविभाविभावितं
तमीतमश्चन्द्रकलाकदम्बकम् ॥

यथाम्बुधेरात्तजलो बलाहकः
प्रतप्तगात्रां पृथिवीं प्रवर्षति।
तथोत्थितः कृष्णरसाम्बुनायका–
दसौ मदङ्गान्यपि कोऽपि तर्पयेत् ॥

भवाम्बुधिं तरितुमनाः कथञ्चना–
वगत्य तं प्रतिनिधिमच्युतस्य ते।
भजामि तं तव भजनोन्मदोऽस्तु यो
नमामि तं नमति पदाम्बुजे च यः॥

# शिवस्य दृष्टेरिव पूरवन्ती

इमं जनं चन्द्रकलावतंसो
विनापि हेतुं परमो दयालुः।
अकिञ्चनं किञ्च विहीनवृत्तं
निजान्तिकेऽवन्तिपुराय वष्टि ॥

पञ्चास्यपञ्चाननराजिकल्पा–
न्यनेकपुष्पाणि सुवाटिकासु।
शिवान्तिकावासविलासहर्षं
स्फुटं स्फुटन्ति प्रथयन्ति यत्र ॥

महेश्वरस्वान्तमनोऽभिरामा
लसन्ति यत्रायतवीथिजालाः।
विशन्ति यस्यामविरोधिभावैः
सम्बाधहीनं जनताव्रजानि ॥

न मेघदूतो न च कालिदासो
न यक्षिणी नापि च गुह्यकोऽत्र।
परन्त्ववन्तीललनाजनाना–
मपाङ्गशम्पा त्वधुनापि लभ्या ॥

सूर्येन्दुवैश्वानरभाभिरेषा
जगत्पुरान्तःपरिपूरयन्ती।
शिवस्य दृष्टेरिव पूरवन्ती
विभाति भक्तान् नितरामवन्ती ॥

# अनन्यत्वम्

यदुत्तमाङ्गं तव पादपद्मयोर्
हरे! त्रिलोकैकशरण्ययोर्नतम् ।
कथं तदुत्सेकमलीमसात्मसु
प्रणम्य नीचेषु निजं विलज्जयेत् ?॥

प्रभो विकल्पेषु तवात्मपोषणे—
ष्विदं मनोहत्य मनो विराजितम् ।
विचिन्तयत् तत् प्रमदाविलानिभान्
कथं सरोजाक्ष! विलक्षतामियात् ?॥

मदक्षिणी रूपजलेऽतलेऽमले
तव प्रफुल्लाम्बुरुहायिते चिरम् ।
त्वदन्यदुर्दर्शनहैमवर्षणैः
कथं व्रजेतामभिधानशेषताम् ॥

# जागर्तु कृष्ण[1] !

यो मानसं मम सदा विकलीकरोति
योऽक्षीणि शिक्षयति वृष्टिनिरन्तरत्वम् ।
रागं च योऽप्यधरयोरधरीकरोति
जागर्तु कृष्ण! मयि ते स वियोगवह्निः ॥

गृह्णाति नाम यदि कश्चिदपि क्वचित्ते
तत्स्पन्दनं क्वचिदवैमि हृदन्तराले ।
तद्वर्धमानमनिशं स्फुटतामुपेत्य
झञ्झेव मामपि समुत्खनतु प्रकामम् ॥

हे माधव! स्मरणतस्तव भाति यन्मे
मृद्नाति कोऽपि हृदयं प्रसभं कराभ्याम् ।
एतं व्यथानुभवमीश्वर! नाहमस्मि
त्रैलोक्यराज्यनिधये प्रतिदातुमर्हः ॥

त्वद्रूपराशिरसनेन रसप्रवाहो
यो नेत्रयोरनुदिनं प्रवहत्यजस्रम् ।
तं दुर्दिनं किल सहस्रवसन्तकालात्
श्रीकृष्णचन्द्र! कलयामि गरिष्ठमूल्यम्॥

---

1. स्वभावसुभगं भ्रातरिदं पद्यचतुष्टयम् ।
वाणीविलासवैचित्रीधात्राननचतुष्टयम्॥
(कवेः शंकरराजरामस्य)

# श्रीकृष्णजन्माष्टमी

अखण्डब्रह्माण्डव्रजपतिपते! पूर्ण! परम!
श्रुतीनां प्राप्तव्यामरगणसमाराधितपद!।
अये सृष्टेः सृष्टिप्रलयविधिपालामल! विभो!
शुभाशंसाः स्युर्मे जननदिनमालक्ष्य भवते ॥

प्रतीक्षाब्धौ मग्ना भवति धरणीयं तव कृते
समागच्छ श्रीमन्! सपदि विपदम्भोधितरणे!।
भवेद्भाद्रे भद्रं सकलजनतानन्दजननं
गतार्धायां रात्रौ समुदयमियाद्भाग्यदिनकृत् ॥

गभीरं गर्जन्ती मुदिररुचिराम्भोदपटली
त्वदागत्याः प्रीत्या मधुरपटहान् वादयति किम्।
तडिल्लोला लीलाधर! परिचलन्ती च नभसि
नभस्ये त्वत्पीताम्बरमिव च मामुत्सुकयति ॥

यथा कारागारेऽतिविकटतया क्रूरभरिते
त्वमागा नव्याभ्रच्छविसुरुचिरश्यामलतनुः।
तथाद्यान्तर्यामिन्! सकलदुरितश्रेणिभरिते
मदीये चित्ते चिद्घन! घनरुचेऽप्यैतु सपदि ॥

पराकाष्ठा प्रेम्णः परमपुरुषाणां परमता
दयासिन्धुर्युक्तः सकलकलया सुन्दरतमः।
अहोरात्रं वंशीमधुरनिनदैराह्वयति मां
कियन्मे दौर्भाग्यं भवति न विरक्तिर्भवदवात् ॥

जगज्जालासक्तेन न ननु मयेशोऽर्चितचरो
ह्यलं स्वीयासंख्यागुणकथनयासेन सुदिने।
दृढा देयानौर्मे करुण! करुणाकारणतया
तरेयं येनाहं भवजलनिधिं द्वन्द्वविचितम् ॥

मनसि मनसिजादीनां दीने दीनैकनाथ! साम्राज्यम्।
आखण्डलानुजाखण्डयन्नखण्डो कथं भवान् वीरः? ॥

# कविता वियोगिनी

तव नामसुधा मुखे विशेदथवा हालहलं महाविषम्।
पृषतान् पिबताद् दिवश्च्युतान् म्रियतां वा तृषयैव चातकः॥

अधरस्तव नाम धारयेदथवा यातु स एडमूकताम्।
अधरेण हरेर्युता लसेन् मुरली वा वन एव शीर्यतु॥

भुवनप्रभुताकरः करः शिरसिच्छत्रवदातपेत्तव।
पुरुहूतकराच्च्युतं पतेत् कुलिशं वाऽनपराद्धमच्युत!॥

कवितारमणी ममानिशं भुवनस्यैकमणिं स्तवीत्वलम्॥
कथनेऽपरचाटुसन्ततेर्वदने जीर्यतु कण्ठकुण्ठया॥

तव रागपरागरूषिता मम केशा विलसन्तु केशव!।
अथवा विधवाजटाजडा रजसा ते मलिना दरिद्रतु॥

अमृतान्मधुरान् समुज्ज्वलान् निजकर्णे विहृतान्यभूषणम्।
तव कर्णरसायनान् गुणानपिनह्यानि सुकर्णिके इव॥

हतवर्णगुणाऽनलङ्कृतिर्विरसाऽदीप्तरुचिर्विसंहिता।
प्रिय! पश्य न मे विराजते विरहे ते कविता वियोगिनी[2]॥

---

2. बलरामकृता वियोगिनी तरसा चित्तगता सुयोगिनी।
सुरसा मधुरा विराजते विरसा नैव हि जायते क्वचित्॥ (श्रीनारायणन्-वर्यस्य)

# पाउअभारई[3]

जयउ सरस्सइ बुहजणवन्दिअअरपाअसेट्ठकंदोट्टा।
पाउअ विअ महुरमुही सक्कअ विअ रूढमाहप्पा॥१॥

जम्पामि णमोवाकं तस्स सअलजीअलोअजीअस्स।
जेण विणा तेल्लोक्कन्तरंगमज्झे ण कम्पिअं किम्पि॥२॥

---

3. (संस्कृतच्छाया)
**प्राकृतभारती**
जयतु सरस्वती बुधजनवन्दिततरश्रेष्ठपादपङ्कजा।
प्राकृतमिव मधुरमुखी संस्कृतमिव रूढमाहात्म्या॥

जल्पामि नमोवाकं तस्मै सकलजीवलोकजीवाय।
येन विना त्रैलोक्यान्तरङ्गमध्ये न कम्पितं किमपि॥

भवतु बुधानां मध्ये परुषस्पर्शं सुसंस्कृतं वचनम्।
जनन्या भारत्या सह शोभते प्राकृतं केवलम्॥

जयतु प्रकृतिसुकुमारा आराध्या मम प्राकृता भाषा।
बद्धानां बुद्धानां सर्वेषां या प्रियप्राया॥

संस्कृतसरस्वत्या सह प्राकृतलक्ष्मीर्यदि न सम्प्राप्ता।
एकनयनैकदूनः काण इव न शोभते कोऽपि॥

प्राकृतवचननिबन्धे प्रथमे स्खलितं सरस्वती माता।
प्रथमपदक्रमकाले बालस्येव मम प्रमुष्णातु॥

तिष्ठतु बुधजनवदने संस्कृतच्छायेव प्राकृतच्छाया।
ममापि सप्तकमेतत् सालङ्काराणां गाथानाम्॥

हवउ बुहाणं मज्झे परुसप्फंसं सुसक्कअं वअणं ।
जणणीएँ भारईए सह सोहइ पाउअं णवरं॥३॥

जयउ पकिदिसुउमारा आरज्झा मज्झ पाउआ भासा ।
बद्धाणं बुद्धाणं सब्बेसिं जा पिअप्पाआ॥४॥

सक्कअसरस्सईए सह जइ पाउअलच्छी ण संपत्ता ।
एक्कणअणक्कदूणो काणो व्व ण सोहिओ हवइ॥५॥

पाउअवअणणिबन्धे पढमे क्खलिअं सरस्सई माआ ।
पढमपअक्कमकाले बालस्स व मुज्झ पम्मुसउ॥६॥

चिट्ठउ बुहजणवअणे सक्कअछाअ व्व पाउअच्छाआ ।
मह वि अ सत्तअमेणं सालंकाराणँ गाहाणं ॥७॥

# वसन्तविलापः

मर्माविधं परभृतां वचसां प्रवृत्तिं
श्रुत्वापि संस्फुटति हृज्जडकोरकस्य।
दीनां दशां मम निरीक्ष्य सुदुर्निरीक्ष्याम्
प्रत्यक्षमस्य हतकस्य न हि प्रभावः ॥

धूनोति चीत्कृतिरियं प्रसभं प्रभावाद्
भानां प्रसारमपि निर्भरगामिनां मे।
सा विप्रयोगजनिताहमिवातितुच्छा
हा! मन्यते न हृदयेऽपि तृणाय तस्य ॥

यस्याः प्रतिश्रुतिमुपेत्य जलौघयुक्ताम्
आशङ्क्यते सुरवरैर्जगतः क्षयाय।
तस्य प्रियस्य शयनावसथं प्रविश्य
संगीतकं भवति चीत्कृतिरस्मदीया ॥

अङ्गारतुल्यसुमनः प्रतिशाखमास्ते
संबम्भ्रमीत्यलिमिषेण च धूमलेखा।
पुष्णात्यमन्दमखिलं किल मन्दवायुः
पश्याग्निकाण्डमभितो भयमादधानम्॥

उद्भिन्नचूतकलिकां मकरन्दलुब्धो
मुग्धो मधुव्रत उपैति सरो विहाय।
शक्नोति वारयितुमेतदमुं न कस्मान्
मद्यौवनं हतगुणं बत यौवतेभ्यः॥

रागाञ्चिते जगति मद् भवतो विरक्तिः
कात्राहृताखिलमदा प्रमदा मदन्या।
त्वं माधवेऽपि विषमप्रतिभासदुष्टे
नेदीयसीह दयसे न कथं कथञ्चित् ॥

पुष्प्यद्घनं व्रणयुतं नु हृदस्मदीयं
भ्रान्तालिपालिरथवा मम चित्तवृत्तिः।
अस्मन्मयीव प्रकृतिस्तव विप्रयोगे
त्वां संस्थिता हृदयहीन! प्रतीक्षमाणा ॥

# विरहस्य रहस्यम्

पाणिने! परमशाब्दिक! शब्दान्
नूतनान् करुणया कुरु मह्यम्।
वक्तुमद्य विरहस्य रहस्यं
यातयाममभिधानवितानम् ॥

न्यस्यतां सपदि तावकशास्त्रे
हे पतञ्जलिमुने! पदमन्यत्।
क्षम्यतां, न मम चित्तविकारो
योगजेन विधिना विनिरोध्यः ॥

भाष्यतां, मुनिरसौ कणभक्षो
भाषतामपरतन्त्रतमिस्रम्।
खण्ड्यतामुत यदिन्द्रियपूगैर्
दृश्यतेऽन्धतमसस्य समूहः ॥

सोपमानरहिताखिलकाले
दृश्यतेऽभिनयनं मम मानिन्!।
खण्डितं सुगतयानविदा तद्
दुर्गतं तव तृतीयप्रमाणम् ॥

प्रेमदोषजनिता विचिकित्स्या
सा रुजाऽपि भिषगीश्वर! नूनम्।
क्वथ्यमानतनुषो नु यया मे
जातमस्ति हृदयं पुटपाकः ॥

स्वर्गनिर्वृतिकराद् हृदयस्थात्
तन्मुखाब्जितहिमांशुविलासात् ।
मन्यसे यदि कुमारिल! भिन्नं
वस्त्वपूर्वकमतो किमपूर्वम् ॥

# छन्दोमुक्तिः

तदर्थं रचयञ् **श्लोकान्** यदापि गणये गणान्।
वारयन्ती तदा ब्रूते पुण्यश्लोका मम प्रिया॥

**आर्या** प्राप्य सुवृत्तां मादृशमतिशुद्धगणगुणैर्युक्ताम्।
गणयसि भिक्षुकतुल्यः पञ्चदशद्वादशादि कथम्॥

विस्मृतनिश्शेषतृषं
मानवसंघैः स्पृहिताम्।
मां परिहायान्यमये
धावसि धिङ् **माणवकम्**॥

लोके वेदे नास्ति वर्णोऽक्षरं वा
वर्ण्येतायं येन वर्णोऽक्षरो मे।
दिष्ट्या लब्ध्वैतादृशीं **शालिनीं** मां
धिक्त्वामन्यां **शालिनी**मेषि काञ्चित्॥

**स्वागती**कृतमसंख्यरसज्ञैश्
चारुणोर्नयनयोर्मम युग्मम्।
कोऽपरः समवधूय समीयात्
**स्वागतार्थ**मपरस्य कदाचित्?॥

स्या**दिन्द्रवज्रा**हतिभीस्तथापि
नैव व्यथन्ते मयि बद्धचित्ताः।

चित्रं पुरस्तेऽपि मयि स्थितायां
चित्ते त्वदीये **'यदि तौ जगौ गः'**!॥

अहो **उपेन्द्र**स्य दयोपलब्धां
तनूमिमां **वज्र**समानकान्तिम्।
विहाय वज्राकृतिचित्तवृत्तीन्
मनोविकल्पाननु बम्भ्रमीषि ॥

विशुद्धजातौ विहितावताराम्
उन्निद्रजातीकुसुमप्रकाराम्।
उपेक्ष्य मां यास्युप**जाति**जातिं
धिङ् मिश्ररूपामनुदात्तसङ्गिन्!॥

सकलविष्टपरूपरसं द्रुतं
मम वपुस्सरसीह विलम्बितम्।
विहतचित्त! विहाय समन्ततो
**द्रुतविलम्बित**मातनुषे कथम् ॥

सस्पृहानन्तनेत्राम्बुज**स्रग्विणीं**
शोभया न्यक्कृताशेषदिव्याङ्गनाम्।
मां विहायापरां शब्दमात्राकृतिं
वीक्षसे रेफलग्नां कथं **स्रग्विणीम्** ॥

यदीहसे वस्तु कवे! निरीक्षितुं
सुवंश**वंशस्थविला**न्मनोहरम्।
मदीयसौन्दर्ययशःपताकि तत्
सुनासिकावंशयुगं विलोक्यताम् ॥

मदाननादूरुचिरतरं न जातुचिन्
नवग्रहैर्जगति दशासु दर्शितम्।
ततः कथं व्रजसि तुदन् स्वमात्मना
समन्वितामथ **रुचिरां** चतुर्ग्रहैः ॥

उक्तं **वसन्ततिलकं** मम रूपमेतन्
मच्चारुताविहृतलोचनवृत्तिमद्भिः ।
स्वीयां तथाप्यरसतां प्रकटीकरोषि
व्यर्थं **वसन्ततिलका**निकटं प्रयास्यन् ॥

क्व सकलजनचेता**मालिनी,** भोगिलोकैः
परिहृतनिजकृत्यैर्दृष्टचन्द्राननाऽहम् ।
क्व च विरसपदार्था लाघवाक्रान्तदेहा
कविजगति सुभुक्ताऽङ्गप्रभा **मालिनी** ते॥

युगानि यदि संभ्रमस्यविरतं तथापि प्रिय!
समस्त**पृथिवी**तले **वसु** न मादृशं लभ्यते ।
अथो यदि मदात्मकं रुचिररत्नमन्विष्टवान्
भविष्यति वसुन्धरा तव तदैव **पृथ्वी** मता ॥

ललितवलितैरस्मन्नेत्रैस्तथा **हरिणी** जिता
न भवति यथाऽरण्ये तासामशङ्कितलङ्घनम् ।
परिहरसि मामेवंप्रायैर्गुणैर्लसिताकृतिं
नसमरसलग्नां किं धावस्यये **हरिणी**मिमाम् ॥

रसैस्सर्वैश्छन्नाममितयतिभिर्वाञ्छितपदां
मनोज्ञां मां मुक्त्वा व्रजसि विफलं चेच् **शिखरिणीम्** ।
गृहस्थां पीयूषप्रतिमरससारां मधुकुतूं
विहाय क्षौद्रार्थं भ्रमसि गतलक्ष्यं **शिखरिणि** ॥

## मन्मयी

मदीयनयनद्वयभ्रमरगुञ्जितैस्सन्ततं
त्वदीयनवयौवनाम्बुजमिदं विनिद्रायते।
मदीयहृदयान्तरस्थितविमुग्धहार्देन्धनै
स्तवाधरयुगे प्रिये! दवहुताशनं दीप्यते॥

निरन्तरविजागरात्यधिकशोणिमा मे दृशोः
कपोलयुगलेऽमले सुतनु! ते सुविस्तीर्यते।
अनेकजनिसम्भृतां मम विलोकनेहामियं
तवावयवसौन्दरी भुवनविश्रुता संश्रिता॥

# एहि

एहि शुभे! तव केशकुलं घनकृष्णनिशो वपुषा तुलये
त्वद्वदनेन्दुनभःशशिनोरथ गौरवलाघवमाकलये।
त्वद् विषवर्धितलोचनलोलशरान् मयि पञ्चशरः कुरुते
जीवय मामधरामृतदानवशादवशं सुदृशां चरमे! ॥

एहि! तव भ्रुयुगोपमया करवालखरत्वमदं विनये
त्वन्नयनस्तवनं नवलाब्जवनानि विवासयतां च वने।
एहि समुज्ज्वलकर्णिकया रविमण्डलखण्डनमातनु ते
प्रोञ्छय नैजपटेन सुरेन्द्रधनुर्हि दुरुद्धततां तनुते॥

एहि! रतिं परिखेदय खेदभरालसविग्रहभाग्यजितां
हर्षय पञ्चशरप्रतिभां प्रतियौवनमानससंस्फुरिताम्।
दूरय दूरगतं त्रिदशेश्वररूढमदं त्रिदिवप्रसृतं
दर्शय दर्पणतुल्यमुखं मुखरं निजमप्सरसां निकरम्॥

त्वं जघनेन घनेन भृशं कदलीकदनेन विराजतराम्
सुस्तनयोर्युगलेन गलेन मृदुस्तनितेन तथा नितराम्।
वारय ते नयनावरणद्वयमिन्दुनिभाननचारुतरे!
धेहि दृशौ मयि सन्तृषिते चपले! चपलाहितहानिकरे! ॥

एह्यनिशं दिवसामलवृत्तचयैस्तव हृत्कलिलानि हरे
त्वच्चलितैर्विजितेभगतैरगतिं नियतिं सजवां विदधे।
एहि! ममाखिलपद्यपदं भव सुन्दरि!, येन न मे विशतु
प्रेमिकुले परिवादपदं 'रचयामि परार्थमहं कविताम्'॥

# यवनीनयनाञ्चलम्

यवनिका यवनीनयनाञ्चलान्
मम मतौ पतितैकपदे तथा।
न तनुकं तनुरङ्गभुवीह मेऽ
—भिनयमुर्वरितं वचनाङ्गयोः॥

गजनवीमहमूदबलैरपि
द्विजकुले न तथाहितमाहितम्।
यवनि! ते नयनोत्थषडीतिभिः
मम मनोविषयेऽपकृतं यथा॥

नहि पराभिरिवाहृतमेव मे
मन इदं सुमनोहरया त्वया।
अहृदये! हृदयार्घमजानती
हतवती पशुघातमनेकशः॥

सुतनु! तेऽतनु हा कुचगौरवं
हरति मे सकलं कुलगौरवम्।
नियमहानिकरश्च तवाधरो
द्विजवरानपि ते कुरुतेऽधरान्॥

प्रमुषितं हृदयादघमर्षणं
व्यपगतो रदनच्छदतो जपः।
मदुपवीतमतीतविशुद्धतं
शकलितं धिगखण्डमखण्डितम्॥

जगति यावनशासनमेधतां
शिरसि ते विदधद् ह्यवगुण्ठनाम्।
व्यथयते दरदृष्टमुखं यदि
किमभविष्यदथाखिलदर्शनात् ॥

विषमयाज्जगतो भयमागता
मधुरता स्तिमिता वचने तव।
सकललोकविखण्डितविग्रहा
तव मुखे महिताऽखिलचारुता ॥

सकलसूर्यतलादवकृष्य सा
मुखतलस्य विभा तव मण्डिता।
विनिहिता विधिना तव सोमतो
नयनयोरनयोरपि सौम्यता ॥

जयतु ते वदनं गतकल्मषं
जयतु मे नयनं सफलाकृति।
जयतु ते वचनं गतकाटवं
जयतु मे श्रवणं मधुरन्ध्रवत् ॥

जयतु ते घनचैकुरपञ्जरं
जयतु मामकगृह्यकमानसम्।
जयतु ते निटिलं शशिसुन्दरं
जयतु मे हृदयाब्धिरसीमितः ॥

जयतु ते निशितभ्रुयुगं प्रिये
जयतु मे कृतमन्तुसमा तनुः।
जयतु तेऽधरयुग्ममिदं ययोर्
मम विराजति शोणितशोणिमा॥

जयतु ते स्तनगण्डशिलाद्वयं
जयतु मे क्षणभङ्गुरसाहसम्।

जयतु ते नयनं जितपङ्कजं
मम निषीदति हृद्भ्रमरो यतः ॥

यवनि! ते नयनाम्बुरुहाय मे
रसयुतं हृदयं सरसीयताम्।
सुवदने! वदनामृतरश्मये
व्रजतु शून्यमनो मम शून्यताम्॥

तव शुभे! स्तनकोकयुगानुगं
मम मुखं सततं दिवसायताम्।
भवतु ते भुजयुग्मलताकृते
तनुरियं सहकारसमाकृतिः॥

रदनमौक्तिकशुक्तिकसुन्दरं
नयनयोर्युगमस्तु विभासि मे।
भवतु मे हृदतीतविकल्पकम्
तव विकल्पविचारनिवेशनम् ॥

# त्वन्मयः

उद्यन्नवीनवयसाद्भुतगन्धवत्यां
लालित्यभाजि शतपुष्पितकुड्मलानाम्।
त्वत्सौभगं मधुरवर्णपदैः प्रशंसद्
भृङ्गायते मम मनस्तवरूपवाट्याम्॥

नित्यं हरत्यखिललोकदृशां प्रवृत्तिं
संजीवयत्यमृतवर्षणतोऽङ्गकानि।
रूपांशुपानपरमक्षिनिमेषहीनं
पीनं चकोरति मनस्तव वक्त्रचन्द्रे॥

साक्षाद्वलक्षितजगन्नयनाञ्चलायां
शीतांशुशोभिवदनेन विराजितायाम्।
उच्चैर्मनोरथतरङ्गतरङ्गिताङ्गं
सिन्धूयते मम मनस्त्वयि चन्द्रिकायाम्॥

तारुण्यवायुपरिदीपितकीलजालो
ज्वालामहावलिविमर्दितसर्ववृत्तिः।
लोकत्रयेऽप्यसुलभाश्रयमन्तरङ्गस्
त्वद्वह्निरेष हृदयं शलभीकरोति॥

स्वोच्चावचश्रुतिसमञ्चितकर्णरन्ध्रा
माधुर्यभावविवशीकृतसर्वजीवाः।
सप्तस्वरागुणितपाशसुपाशिताङ्गं
कर्षन्ति चित्ततुरगं तव कण्ठरागाः॥

# श्रुतं समायासि!

श्रुतं, समायासि मदीयवीथिकां
पथोऽन्धकारं हि समस्तमस्यते।
प्रतिप्रघाणं हितजीवितामृतं
कपाटपूगा विवृताखिलार्गलाः ॥

श्रुतं, पदं धास्यसि—मेदिनी ततः
पदारविन्दामृतमत्र धास्यति।
अनेन वृत्तान्तबलेन जीविते
कणे कणे नर्तनमद्य दृश्यते ॥

त्वदीयकेशागुरुधूपवासितो
चिरादपि त्यक्तुमपारयन्नसौ।
अमन्दसौगन्ध्यभरेण मेदुरः
प्रवाति वातोऽसुखमेव तन्द्रितः॥

# पिङ्गलपालनम्

प्रतिपलं गणयामि गणानहं
भवतु कापि यतः कविता यतः।
सकलसुन्दरि! तावकसौन्दरी
यदि शतांशतयाऽपि नु वर्ण्यताम् ॥

तरुणताऽतिमता गमिता वृथा
सुनिपुणं मम पिङ्गलपालने।
अतितरां कवनेन परन्तु मे
सुवदना न हि कापि प्रसादिता ॥

सुवदनामनुधावति मे हृदि
सुवदना न करोति पदं बत।
न हि च हर्षयते नु प्रहर्षिणी
द्रुतविलम्बितमत्र करोम्यति ॥

# तवाननचन्द्रमाः

हृदयगगने मे संदीप्तस्तवाननचन्द्रमा
नयनसुभगस्ताराराशीश्वरोऽनघविग्रहः ।
मम कुवलयाकारे नेत्रे यतः प्रविकासिते
पिबति सुहितं रूपं चित्तं चकोरसहोदरम्॥

मदनसुहृदारात्रिप्रीतं विलोचनरोचनम्
नवलधवलैर्वर्णैर्वृत्तं सुवृत्ततराकृति ।
कृतिततिभिराचान्तं प्रेयः कदाचिदिव स्फुटं
गुणसमतया चन्द्रादन्येन केन तवोपमा ॥

# प्रेमसत्रम्

नवीनसत्रं पुनरागतं गतस्
तपो गता प्रावृषि कालसूचिका।
वकाशमाक्षिप्य कृतं हि बालकैर्
नवीनवर्गं गमनाय मानसम्॥

पुरातनप्रेमविदीर्णचेतसां
न नो नवीनं किमपीह विद्यते।
ततो वियोगः क्षयकालसूर्यवत्
सदायमाचामति चित्तचेतनाम्॥

नभोनभस्याविव चक्षुषोर्द्वयी
निरन्तरं वर्षति प्रावृषं विना।
गता कदा प्रावृडिहागता कदा
न मेऽवकाशः स्मरणाय किञ्चन ॥

नवीनवर्गान् प्रतिहायनं समे
प्रयान्ति बाला नियतोत्तरोत्तरम्।
अहं तु रुद्धप्रसरो बताधुनाऽ
नुरागवर्गे प्रपठामि मातृकाम् ॥

न नूतनाध्यापनमत्र जायते
न वावकाशस्य कदापि घोषणा।
वियोगकक्षे तु निषाद्य केवलं
भवत्यहोरात्रमहो परीक्षणम् ॥

नवीनसत्रे नववस्त्रशोभिताः
प्रयान्ति सोत्कं पठनाय बालकाः ।
ममात्र गात्रे तु तथैव सीदति
विशीर्णतन्तु प्रणयस्य कर्पटम् ॥

न विद्यते नूतनसत्रसंगमे
करे परेषामिव पुस्तकं नवम् ।
हृदन्तराले लिखितं पुरातनं
तदेव तन्नाम पठामि सन्ततम्॥

मनोऽवकाशे प्रणयस्य देशिको
वियोगपाठान् नितरां ददाति मे ।
करोमि किं बाष्पमषीमिषादहं
निरन्तरं वक्षसि लेखनाद्विना ॥

## सुनिधिः

तदीयवदनाकृतिर्न तु हिमांशुबिम्बानुगा
तथापि मम मानसं सततमेतया ह्लादते।
तदीयनयनद्वयं न च सरोजसौन्दर्यवत्
तथापि बलवन्मम भ्रमरमान्तरं कर्षति ॥

तदीयकचसंहतिर्न निशया भृशं तुल्यभास्
तथापि मम स्वप्नवज् जगदिहैव शेते सुखम्।
न वाऽतिनिशितासिवद् भवति युग्मकं तद्भ्रुवोस्
तथापि मम संयमस्य कवचं ततो दीर्यते ॥

तदीयमधुराधरौ न खलु बिम्बरागौ, परं
मदीयजगतोऽरुणक्षितिजशोभिनौ तावुभौ।
तदीयरदनावली न खलु मुक्तिकामञ्जुलाऽ
नयैव सदने मम द्युतितति: परं विद्यते ॥

तदीयवचनामृतं त्रिदिवसंस्थितं नामृतं
परं तदशनेन मे हृदयमाशु जीवत्यलम्।
प्रतप्तनवकाञ्चनप्रभववर्णपूर्णा न सा
तथापि समवाप्य तां त्रिभुवनैकधन्योऽस्म्यहम्॥

(युग्मकम्)

अमन्दमतिनन्दनैर्मधुरमन्दवाक्चन्दनैः
समं मम समन्ततोऽवयवमेधयन्ती स्थिताम्।

सुधां विदधतीं मुधा स्वदृगपाङ्गपातैरिमा–
मदभ्रमदविभ्रमैरतनु नन्दयन्तीं हृदम् ॥

उदर्चिषि हुताशने भवति कृत्यसत्साक्षिणि
पवित्रनिगमागमध्वनिषु गाहमाने क्षणे ।
गृहीतकरपङ्कजां सुनिधिमीश्वरस्याज्ञया
मदीयगृहदेवतां न तु विहाय मे नायिका॥

# चेतोभृङ्गम्

कुसुमनिकरः पुष्प्येद् वर्णावलीभिरलंकृतोऽ
प्यहमहमिकासङ्गैर्भृङ्गैर्निपीतरसान्तरः ।
मम पुनरिदं चेतोभृङ्गं भवत्पदपङ्कजा–
धिकतररसास्वादोन्मत्तो न चेतयतेऽपरम् ॥

प्रचुररुचिरैस्तत्तत्स्वाङ्गैः सुयौवनजृम्भितैर्
युवजनदृशोराज्यं लुण्ठद् व्रजेद्युवतिव्रजम् ।
मम पुनरिदं नेत्रद्वन्द्वं त्वदीयमुखाकृते
रपरमपरं नैव द्रष्टुं व्रतीव विराजते ॥

# अनन्वयः[4]

क्व प्रियाधरयुगं ममाधरे क्वामृतं क्वचन दूरसंस्थितम् ।
क्व प्रियाङ्कमिलिता कवोष्णता क्वाथवापि विरसं वसन्तकम्॥

तन्त्रिकाक्वणनझङ्कृतेः कृते रङ्गशालमगमं मुदा क्वचित् ।
क्व प्रियावचनतानमाधुरी नीरसः क्व च विपञ्चिकास्वनः ॥

ह्लादनाय हृदयस्य हन्त! किं वाटिकाविहरणे मतिः कृता ।
क्व प्रियामुखसरोजसौन्दरी क्व प्रसूनमधिवाटिकं स्थितम्॥

व्यर्थमेव विहिताधिकादरोऽभूवमेष हि समीरणेरिते ।
क्व प्रियागमनगौरवं वरं क्व प्रगे पवनपङ्क्तिरंहितम्॥

कौमुदीकलितयामिनीषु किं लब्धमस्ति वद दीर्घजागरैः ।
क्वार्जुनं वपुरपूर्वसौभगं मन्दचन्दिरगतं क्व पाण्डवम्॥

किं विरिञ्चरचिते महीतले त्वत्तुलां व्रजतु सुन्दरि! क्वचित् ।
सर्वलोकसमलङ्कृते! त्वया चित्रमेष रचितोऽस्त्यनन्वयः ॥

---

4 क. निलिम्पनगरीझरीतरलसीकरप्राघुणीभवल्ललितनन्दनोल्लसितमारुतोर्मीसखः ।

सुखं किमपि चेतसि प्रतनुते ननु त्वद्वचोविलासगरिमा सखे विधिवधूकटाक्षादृतः॥
(अष्टावधानकवेः श्रीशङ्करराजारामस्य)

ख. शोभनं रचितमेव ते सखे कामिनीहृदयगामिमञ्जरी ।
दर्शनेन नवशब्दबोधनं यत्कृतं तव मुहुः प्रियं हि तत्॥

(वासुकिजस्य श्रीविश्वासस्य)

# अरविन्दकाननसुगन्धि

तव चुम्बनेन रुचिरे! समभूदरविन्दकाननसुगन्धि मुखम्।
तव दर्शनेन शुभदर्शनके! विहितामृताशनमिवाक्षियुगम्॥

स्पृशतस्सकृद् भवति वः शरदो नवनीतदिग्ध इव मेऽवयवः।
भवतस्तव स्मरणतस्सुतनो! मधुमाधवाविव मनोहृदये ॥

तव नामवामनयने! गृणतो मधुधोरणीपरिगता रसना।
अरविन्दवन्दितमिवेन्दुमुखि! त्वदपाङ्सङ्गतशरीरमिदम्॥

तव चिन्तनेन मम चित्तमभूच् शतदीपदीपितमिवायतनम्।
मृगनाभिवासितमिदं निखिलं तव वासनाभिरभितो भवति॥

तव केशवेशवशतो विशदे! जनिता निशा मम निशाततरा।
अभिलाषतन्तुरतिदीर्घतरश् चरितं च मे सुरभिगन्धितरम् ॥

लपति त्वया च मयि मां परितः कविकालिदासकविता स्फुरति।
अधरीकृतान्यवचनस्फुरणा सरसा समस्तमधुरा ललिता ॥

# मञ्जुभाषिणी[5]

मधुराधरामलसुपल्लवोद्गतां हसितप्रसूननिकुरम्बसौन्दरीम् ।
नयनेन हस्तयुगलेन भूरिशो रदनच्छंदेन विचिनोमि सुन्दरि! ॥

तव नेत्रयोर्लसदपाङ्गपङ्कजप्रकरावनद्धमनुरागसन्धितम् ।
जयमाल्यमेष रुचिरे! चिरादहं भुवनत्रयस्य विजयीव धारये ॥

शतकोटितीक्ष्णकरवालभीषणे निशितभ्रु! ते भ्रुयुगले ससाहसम् ।
अपि वारितं मम तु मञ्जुभाषिणि! कुरुते पदानि हृदयं स्खलत्पदम्॥

स्मरणे तव स्मररणानुजीवने सुरवाटिकाविहरणानुहारिणि ।
हृदयं मदीयहृदयाधिनायिके! रमणाय मे स्पृहयते निरन्तरम् ॥

विरहव्यथाऽनिशविकासवासिता हृदये, तव स्थिरतया कदर्थिता ।
पतति प्रगेऽश्रुभिरधो विलोचनात् कलपारिजातकुसुमावलिर्यथा॥

नवयौवनोदयविलासमाधुरी कविताऽमृताधिकरसा, सुधर्मिता ।
अधुनावधि त्रितयमर्जितं भवे त्वदपाङ्पातविधये समर्पये ॥

प्रहिता मुदा परमशारदाम्बया बलरामशुक्लरचिता सरस्वती ।
जननीव पोषणपरा विदां भवेत् तनुयान् मुदं च तनयेव मानसे ॥

5. इत्याशासत आचार्या रामानुजदेवनाथवर्याः—
मधुरा परा सुललिता मनोभवा प्रहिता प्रिया सुकविता च सुन्दरी ।
नितरां मनो ह्यभिकरोति सौगतं निपुणं कृता सितवरा च भाषिणी॥

# कविता

प्रवृत्ता सद्योगान्नयनसरणीसम्भृतवपुः
कृताशङ्का दोषे तदपि सुखयन्तीन्द्रियचयम्।
विदग्धैः सम्भाव्या पिशुनवदनस्थानविरला
नवप्रीतिप्राया भवति कविता नूतनकवेः ॥

सुवृत्तां सद्रीतिं नवनवरसात्मानमनघां
प्रसन्नामासन्नां गुणगुणितसज्जातिसुभगाम्।
परीपाकं प्राचां बहुलसुकृतानामसुकृती
कृते स्वानन्दानां न सुतनुमिवाप्नोति कविताम्॥

रहस्यात्मोत्पन्ना मनसिशयरूपा क्रमभृता
निविष्टा सत्पात्रे परवसतिविश्रान्तिवितता।
परेषां च स्वेषां सुचिरमिव सौभाग्यजननी
कविं सत्पुत्रीवत् पितरमिव प्रीणाति कविता॥

कविस्वान्तेऽश्रान्ते विचरति विचारेऽपि विविधे
कृती कश्चिद्भावो व्रजति कवितात्मानमथवा।
वरिष्ठं वा काष्ठं मलयशिखरे भातु सुतनु
स्तनस्थानस्थानं मलयजमृते नैव लभते॥

सुपोषायार्थस्य प्रतिपदमदभ्रं प्रयतनं
नसिद्धानां सिद्धैर्विविधपरिमाणैश्च तुलना।
रसादिव्यापारैर्निखिलजनतापोषणपरात्
परः क्लेशं कोऽसावनुभवति पत्युः कविविशाम्॥

# यौवनम्

कुसुमसमयाकारं प्रायो विभाति सुयौवनं
सपदि समयाघातैः सर्वे गलन्ति बलादयः।
परिणमति वार्धक्यं देहो, नु दुःखपरम्परां
कथमु विमृशन् यायाद्धैर्यं स्थिरामथ निर्वृतिम् ॥

उदयमयनात् पूर्वाद्यावत्तथास्तमनात्परं
जठरपिठरापूर्त्यै नित्यं श्ववत् परिवृत्यते।
निशि च दहति स्वप्नाकृत्याऽप्रपूरितवासना
किमु न मरणं श्रेयोऽस्त्यस्मादिदं यदि जीवितम् ॥

पतति कुसुमं रूपाकारं पतन्ति च वाग्वयो
दृगपि तमसा रुद्धा बुद्धिर्बुधामपि बाध्यते।
गलति च महास्कन्धैर्व्याप्तं तरूपमविग्रहो
ननु तनुवनोद्देशे वृद्धत्वमारुति वाति रे ॥

सततमसुखाविद्धं दुःखोपघातविशङ्कितं
विरहभयभीतं यत्तृष्णाहुताशनवर्द्धितम्।
महति महताहंकारान्धौ तथा विनिपातकं
सुखमसुखतः शुष्कं दृष्ट्वा सुखं कथयेत कः॥

श्रुतिभिरुदिता ज्ञाताः कामा अनर्थपरम्परा
अनुभवति भुञ्जानं तृप्तिं मनो न मनागपि।
तदपि विषयान्दृष्ट्वा बुद्धेर्बलं बत स्रंसते
तितउविवरात् कस्मात्सद्यो यथा सिकताव्रजः ॥

बहुनि पठितं शास्त्रे दद्यान्मनो न सकामतां
तदपि करणं सर्वं जातं फलैषणयाविलम्।
ग्रसितमभितश्चेतो भावैर्ममास्ति कृतागसां
नहि मयि बलं ज्ञातं तत्त्वं यतोऽभ्यसितं भवेत्॥

बहुलविषयावेगा निद्रा प्रमादपुरस्सरा
गुरुजनवचोभङ्गः शास्त्रानुसारविहीनता।
इह हि समये किञ्चित्कर्तुं बलं समवस्थितं
तदपि भरितं प्रत्यूहानां कुलैर्बत यौवनम् ॥

# निरपेक्षा कविता[6]

न गन्धिकमपेक्षते विकसनाय पुष्पावली
वनेऽप्युपवनेऽप्यसौ समतया समुन्मीलति।
तमोऽपहरुचाऽनिशं भृशमसौ ज्वलन्त्यानिशं
न दीपयति दीपिका शलभलोभवृद्ध्यै गृहम् ॥

दिवाकरकरप्रिया सरसि सा सरोजावली
शिलीमुखमुखानि किं समवलोक्य संवर्धते?।
रसालनवमञ्जरी सरसपत्रमध्योद्गता
विचिन्त्य न विकास्यते मदयितुं हि पुंस्कोकिलान् ॥

"रथाङ्गयुगलान्यहं मृतमृतानि सञ्जीवये
मयूरनिकरानथापि नटने समुत्कण्ठये"।
नभस्यपि विहायसि प्रचुरनीलपद्माकृतिः
किमित्थमवधार्य वा स्फुरति कापि कादम्बिनी? ॥

तथैव कविता कवेः सुकृतिनः क्वचिन्मानसान्
मुखाब्जमभिसंगता हृदयभावनोद्वेलनैः।
अलौकिकरसान्विता भवति या सुपूर्णा स्वतः
न सा क्वचिदपेक्षते न रसिकान् न वाऽऽलोचकान् ॥

---

6. निरपेक्षा तव कविता शुक्लमहोदय, सुरम्यता महिता।
आवर्जयति हृदमियं प्रसभं सद्यः सहृदयानाम्॥
(परमाचार्यरामकरणशर्मणाम्)

# विडम्बना

स्वल्पो धर्मश्चर्यते चेत्कदाचित्
संजायन्ते दीर्घदम्भातिरेकाः।
स्नेहे वृष्टे वर्षविप्रुट्पवित्रे
सम्पद्यन्ते वासनापल्वलानि ॥

दभ्रे दाने कुत्रचिद्दीयमानेऽ
प्यादीयन्ते दर्पदुर्वारवेगाः।
एकं वाक्यं स्थाप्यते चेत्प्रशस्तौ
तस्मिन् क्षिप्ता जायते चाटुचम्पूः ॥

एकं पुष्पं कोरकादुद्गताङ्गं
तच्छेदार्थं कण्टकानां सहस्रम्।
स्तोका शुक्तिर्भ्रूणसंजातमुक्ता
भाग्याद्वक्रात् सा लुठन्नक्रचक्रा ॥

एको जीवश्छागवत्साभजीवो
दैवाहूता भूरिशो मृत्युदूताः।
एकं चित्तं किञ्चिदाध्यातसत्त्वं
तन्मोहायाभाति सर्वत्र माया ॥

एकोद्गन्तुं वर्तिका वर्तमाना
तामुत्कर्तुं सोद्यमः श्येनसंघः।
अर्धप्राणा कम्पमानान्तरैणी
शूरायन्ते तत्र हाऽश्रान्तसिंहाः ॥
पद्मासद्मा भाति के पद्मिनी तां
हन्तासारैर्हन्ति शीतं तुषारैः।
एकं फुल्लं पाटलस्य प्रसूनं
भीष्मग्रीष्मं भृष्टवत् तिग्मपादैः ॥

# त्रिचक्रिकाचालककाव्यम्

त्रिचक्रिकाचालकसुन्दरस्मितं
दिनेऽपि सेन्दूकृतसच्चतुष्पथम्।
अमासमे हर्म्यतलेऽघदूषिते
शताट्टहासान् धनिनामदोऽर्हति ॥

ब्रवीमि ते घर्मजलैश्च दुर्दिनी–
कृतं कृतिन्! धन्यतरं सुजीवितम्।
अघेश्वराणां दुरुदर्कदुर्भगाद्
धनेन धन्वीकृतजीवनादिदम् ॥

मुखं वलीपङ्क्तिसुशोभिभालकं
परिस्रवद्धर्मजलाविलाकृति।
तमालगन्धि प्रकटं मलीमसं
मयेष्यते ते परिचुम्ब्यतामिति ॥

चतुष्पथे प्रस्तरितैरथाक्षिभिः
प्रतीक्षमाणैः परितः पदातये।
विसृज्यमाना वदनेषु शून्यता
हृदस्मदीयं ज्वलयत्यहर्निशम् ॥

स्फुटच्छिरं बद्धशरीरमारुतं
यदोच्चभूमिं प्रसभं विकर्षसि।
स्वकीययानं व्ययिताखिलोर्ज्जया
तदा मनो मे सकलं विलीयते ॥

त्वयोह्यमानो विपथे विसंष्ठुले
स्वनायकानामिव दन्तुरान्तरे।
विचारयेऽहं तव दुःखदुःखितस्
त्वमास्स्व यानेऽथ वहाम्यंतः परम् ॥

सलज्जचित्तोऽस्म्यपराधबोधतो
मनुष्यताऽत्रास्ति कथं प्रधर्षिता।
कथं च कश्चित् स्थितिमान् सदासने
तथापरः कर्षति यन्त्रवद्भुवि ॥

# पुत्रिका[7]

पुत्रि! तवारुणदन्तपटान्तं स्वान्तमिदं वितनोति वसन्तम्।
गात्रतनूरुहमात्रमहीने! नात्र, तनौ सकलं नरिनर्ति ॥

मन्मनसः किल कल्पनयेव देवदृशाऽसि सुमूर्तिमती त्वम्।
पश्य च ते! वदतीव समस्ता स्वागतवाङ्गिनकरं जगदेतत्॥

अद्य प्रभृत्यनुशास्यत एष त्वदुरुचिरप्रभया हृतवेषः।
"इच्छति चेत् स्वहितं गगनेन्दुस्त्वद्वदनेन्दुवदेव विराजेत्" ॥

यद्यपि नैव वदस्यभिजाते! मां सकलं विवृणोषि तथापि।
"तुभ्यमहं जनकास्मि नियत्या सुप्रहिता समुपायनभूता"॥

यद्यपि नैव जगन्नवजाते! दृष्टमिदं न वहान्तरखेदम्।
त्वां न हि दृष्टवदित्यथ खेदानूनतरं तनुते जगदेतत् ॥

मीनयुगं नयनस्य मदीयं रूपजलेन सुखं चरते ते।
बाहुयुगेन कपाटनिभेन बन्धुतमे! स्पृहयाम्यनुबन्धुम् ॥

---

7. क. शुक्ल कवित्वमिदं मम चेतःपङ्कजभास्करतामुपयाति।
स्याद्दुहिता सुहिताखिलसत्त्वा ''जीव शतं शरदां सुखयन्ती''॥ (आचार्यरामकरणशर्मणाम्)
ख. रात्रौ नात्र विभावरीशशकलः कुत्रापि सन्दृश्यते
मेघाच्छादिततात्र हेतुरिति तन्मोघं वचो मन्महे।
धात्रायं तव पुत्रिकाननकृते व्यावर्ति निस्संशयं
रिक्तेयं बत धूर्जटेरपि जटा रुद्रोऽपि रोरोत्त्यतः॥ (पी0 नारायणन् कवेः)

फाल्गुनमासि वसन्तविभेव सुन्दरि! यद्युदिताङ्गलतासि।
अद्य प्रभृत्यखिलो मम मासः फाल्गुन एव, ऋतुश्च वसन्तः ॥

प्रापमहं त्वयि चागतवत्यां सर्वनिधिं गलिताखिलवाञ्छः।
मत्कविताऽप्यनुजां समवापत् प्रापदिदं जगदप्यपरेन्दुम् ॥

सैव सुवर्णततिः सकलाङ्गे दीप्तिरसौ च स एव प्रसादः।
व्यक्तिरसौ हसिताखिलवाच्या पुत्रि! प्रिया कवितेव ममासि ॥

अद्य ममाखिलकुण्डलिमध्ये दैवविदः शशिनं मृगयन्ते।
सोऽपि समस्तकलाकलितात्मा त्वद्वदनेऽस्त्युररीकृतवासः ॥

नित्यमनित्यसुखादृतिहीनं शास्त्रकृतान्तविलोपितलोकम्।
अर्थकृशं सुविमृश्य रमेशो त्वां स रमामिव मां प्रहिणोति ॥

स्वीयवसन्तमनोरमगात्रैः स्नेहसुधारसवर्षणशीला।
तप्तमुरः शिशिरं विदधाना जीव शतं शरदां सुखयन्ती ॥

राजवेश्मनि भवन्ति प्रायशः पुत्रि! चन्द्रमुखि! राजदारिकाः।
किन्तु मेऽजनि सुजातया त्वया राजवेश्म ननु वेश्म साम्प्रतम् ॥

तिष्ठ वृन्तमिलितैव मालिके! बालिकेव पितुरङ्कनिर्वृता।
संयुतोऽभवमहं तनूजया त्वां वियोजयितुमत्र नोत्सहे ॥

# आर्यास्माकं प्रेयःपुत्री

आर्यास्माकं प्रेयःपुत्री कुर्वत्यस्मान् नित्यं तृप्तान्।
चान्द्री लेखेवास्मद्गेहे दिव्याल्लोकादङ्कं प्राप्ता॥

वर्णे वर्णे गौरी गौरी केशे केशे श्यामा श्यामा।
कोपे कोपे मिथ्या मिथ्या हासे हासे विद्युन्माला॥

गण्डे तस्याः सर्वा वाटी तन्नेत्रे सर्वं पीयूषम्।
ओष्ठे तस्याः सर्वो रागः किं नोच्येतास्मत्सर्वस्वम्॥

उद्भिद्यद्दन्तोत्थाः कण्डूर्हन्तुं हस्तं संरम्भेण।
नीत्वा वस्त्राभ्यां सा मोघं कृन्तन्ती हर्षायालं नः॥

मो मो गो गोऽस्पष्टां वाचं वारं वारं सोत्का सोक्त्वा।
मातुः क्रोडे दन्तैर्हीनैर्हासैर्युक्ता विद्युन्माला॥

अस्पष्टाभिर्वाग्भिर्युक्ता सर्वं हार्दं वृत्तं ब्रूते।
पादैर्वैषम्याक्तैर्धत्ते शीघ्रं स्वान्ते स्थानं, चित्रम्॥

मात्रा दुग्धं पित्रा प्रेम प्राप्याशीर्वाचोऽन्यैस्तातैः।
नूत्नेन्दोर्लेखेवैधन्तामङ्गान्यानन्दैर्नः साकम्॥

# संस्कृतकविता

रसिकजनसभा गता निशीथं विरतकराश्च मृदङ्गवेणुमन्तः।
अनुकृतनिजनूपुरानुरावा तदपि नटी नरिनर्ति भावमग्ना ॥

न चटुनिनदषट्पदप्रशंसा न कुशलमालिकहस्तसंस्कृतानि।
विजनवनगताऽप्यमन्दगन्धा व्रततिततिः कुसुमस्य पुष्पिताग्रा॥

अलुलितमलयाचलानिलेयं चिरमनपेक्ष्य वसन्तमप्यसन्तम्।
पिकततिरभिपञ्चमप्रपञ्चं कुसुमशरासनशासनं विनैव॥

उपरि न हि महेन्द्रदृष्टिवृष्टिर् न च सरसापि रसातलप्रवृत्तिः।
किमपि मनसिकृत्य कृत्यबीजं वपति तदापि कृषीवलावलीयम्॥

सहृदयहृदयानि शुष्कवन्ति प्रतिपदलक्षद ईश्वरोऽपि नष्टः।
स्तुतिवरसुमुखी न सम्मुखीना तदपि तथैव तु शारदानुकम्पा॥

त्वयि समजनि शून्यरङ्गशाला भरतगणैस्समुपासिता पुरा या।
इति जगति तवाद्य मास्तु कुत्सा महिमनि नर्तकि! नृत्य नृत्यचुञ्चो!॥

अतलजलनिषिच्यमानमूले! विबुधसुमैरभिवन्द्यमानगन्धे!।
सकलजगति वर्ण्यमानवर्णे! कुसुमलते! विकसात्मनोऽनुरूपम्॥

न भवतु पवनो न वा विकासः कुसुमकुले कुसुमायुधाज्ञया वा।
निखिलकुसुमकालकृत्यजातं त्वयि भविता मधुदूति! कूज कामम्॥

त्रिदशपतिकुदृष्टिपीडिताऽऽस्ते धरणिरियं तदवग्रहक्षता चेत्।
जगदवनसमर्थबीजरक्षा त्वयि कृषिकावलि! केवलं भवित्री॥

न धनधिषणया न कीर्तिकान्त्या न च समनस्समुदायलाभलोभात्।
निजहृदयसमुत्सवानुरोधादिह कवयन्ति सरस्वतीसुपुत्राः॥

हिमहतिकठिनीकृता त्रिलोकी रविकिरणेन जनिष्यते सजीवा।
पुनरपि भविता वसन्तकालः सरिदपि तत्र तरङ्गिणी भवित्री॥

## उपश्लोकः

(आचार्यप्रवराः श्रीमतीः दीप्तित्रिपाठिवर्याः प्रति)

एतन्मात्रं मया मातर्वक्तुमत्र व्यवस्यते।
पितॄन् मे कृतवान् धाता त्वां कृत्वा पितराविव॥

## आर्यायार्या

(संस्कृतजगति पितामहत्वेनाख्यातान् श्रीमदाचार्यरामकरणशर्मणः प्रति)

आर्याखिलशिष्यकुलैरार्याजितधेनुवर्धनाचार्य!।
एकार्य! वर्यविदुषामार्यायार्या प्रसन्नास्तु ॥

## पदशास्त्राब्धिसेतुः

(काशिकाष्टाध्याय्योराङ्ग्लवाचा व्याख्यातॄनाचार्यरमानाथशर्मणः प्रति)

धन्योऽहं कवितेयं यदि भवतामग्रहस्तयोः प्रपतेत्।
पदशास्त्रदुर्गमाब्धिं सुतरीतुं सेतुतुल्यानाम् ॥

## कवितोपवनमालाकारः

(रसिकप्रवरकविवरश्रीमद्राधावल्लभत्रिपाठिनः प्रति)

मालाकारापि जानीषे? यदन्तश्शतकोरकाः।
मयि स्फुटन्ति सह ते स्फुरन्त्या स्निग्धया दृशा॥

राधावल्लभ आयाते जडताः शृङ्खला इव।
लीयन्ते, वसुदेवस्य कंसकारालये यथा ॥

## दण्डकारण्यहरिः

(श्रीमद्रामानुजदेवनाथवर्यान् प्रति)

दण्डकारण्यरमणे रामच्छन्दानुवर्तिनि ।
रामानुजे वरीवर्ति शक्तिरद्यापि केवले॥

## यस्मादस्मद्धारतं भाति भूमौ

(स्रग्विणीकविपद्मश्रीमद्रमाकान्तशुक्लान् प्रति कृतवेदितावेदनम्)

येषामेतद्देववाणीविलासो
यस्मादस्मद्धारतं भाति भूमौ ।
शालीनाभिश्शालिनीभिस्त एते
सम्बोध्यन्ते श्रीरमाकान्तशुक्लाः॥

आगत्यात्र च्छन्दसां गीतिरीतिं
यच्छालायां प्रोक्तवन्तो भवन्तः ।
आहूयास्मान् पण्डितेन्द्रप्रसङ्गे
पद्यप्राये पूर्णपूर्णानकुर्वन् ॥

अस्माकं यत्प्रेरितश्छात्रवर्गः
पीयूषाभैस्सद्वचोभिर्भवद्भिः ।
तत्सौभाग्यं छात्रकालेऽनवाप्तं
पुण्यापाकात् पीडयत्यस्मदादीन्॥

साक्षात्कारो यत्कृते पत्रिकाया
दत्तस्सद्योऽस्तीन्द्रप्रस्थाभिधायाः ।
एतत्सर्वं श्रीमतां युक्तमास्ते
नित्यं नूत्ने छात्रवार्ते रतानाम्॥

सौजन्यार्थं यद्भवत्सोदराभं
कारुण्यार्थं यस्य लाभात्कृतार्थाः

जानीमस्स्वान् धन्यधन्यांस्तदर्थं
स्वार्थानग्रेऽपीक्षमाणाः पुनस्तान्॥

## सर्वतन्त्रस्वतन्त्रः

(सुविश्रुतकीर्तीनामस्मद्गुरुचरणानां सत्यपालनारङ्गमहाशयानां महिम्नि)

यत्पादाब्जेऽप्यकृतकतया मे नमत्युत्तमाङ्गं
साहित्यादौ सुविहितगतिः सर्वतन्त्रस्वतन्त्रः।
स्वीयज्ञानव्यवहृतिवशाच् शिष्यवृन्दार्चिताङ्घ्रिः
प्रीतः स्यान् मे मम गुरुवरः श्रीयुतः सत्यपालः ॥

## विद्यापतिलोकलालित !

(अग्रजनिर्विशेषाञ् श्रीमत्परमानन्दझावर्यान् प्रति)

परमानन्दं वन्दे समस्तविद्याविलासितमनस्कम्।
स्तुतिकन्यावृतकान्तं शास्त्रान्ताभ्यासतस्तान्तम् ॥

यद्धृदयमलयनिलयं कविता-श्रीखण्ड-मण्डलमुदारम्।
पदमसुरासुरपदयोर्लभते वाग्देवतापदयोः॥

प्रालेयालयनिटिलान्निखिलानन्दैकहेतुरिव गंगा।
प्रसरति सदा प्रसन्ना यत्पदरचना प्रसादयितुम्!!

"स हि खलु भवति प्रदीपः प्रकाशशून्यान् प्रकाशयत्यन्यान्"।
विरचयता मम कविताः प्रदीपता स्वस्य साधिता भवता॥

परमपुरुषस्य योषा माता येषां गृहे जाता।
तुलनापि मैथिलेभ्यस्तेभ्योऽखिलमातुलेभ्यः का? ॥

दायाद! मैथिलानां विद्यापतिलोकलालित! लभन्ताम्।
रिक्थान्यतिरिक्तान्यपि विदुषां प्राचामथ भवन्तम् ॥

# दाक्षिण्यं दाक्षिणात्यानाम्

(महाकवीन् शङ्कराजारामवर्यान् प्रति)

दाक्षिण्यं दाक्षिणात्यानामौदीच्यधिषणोत्तरम् ।
पूर्वपश्चिमयोः ख्यातमप्यपूर्वमपश्चिमम् ॥

स्निग्धच्छायविलासः सुमनोवर्णैर्हरन्नरं चेतः ।
शङ्कर‌राजारामो राजारामेण तुल्यतां भजति॥

अयि शङ्कर! नैजलेखनं तव काव्ये विरसं विभाति मे ।
जय जीव शतं समाः कवे! जगतां हर्षमभिप्रवर्धयन्॥

तव हस्तगतां सुलेखनीं नियतं चुम्बति शारदाम्बिका ।
अतिलोकरसान्वितं कथं पदजातं कथयान्यथा भवेत्!॥

स्तव एष सरस्वतीसुत! तव जानामि न रोचते सतः ।
जननीप्रमदाय जायते निजपुत्राय चटुप्रदर्शनम्॥

सुन्दरमिदं कवित्वं शङ्करवर्यस्य तापहारितरम् ।
दुर्दिनवर्णनपरमपि कुरुते सुदिनं दिनं सरसम्॥

## १–संस्तूयतां शासनम्

(संस्कृतोर्दूसंस्कृतपारसीकभाषाभिः)

स्वातन्त्र्यप्रतिभु प्रमादरहितं सन्नीतिरीतौ रतं
विप्रे वा गवि कुक्कुरे करिणि वा साम्यस्य सन्दर्शकम्।
लोंकाशोककरं परेशविहितं धात्रीशतेभ्यो हितं
वेदान्तस्य सुमङ्गलाय जगतां **संस्तूयतां शासनम्॥**

जिसकी साँसों से साँसें हमारी रवाँ
जिसकी आँखों में दिखते हैं सात आसमाँ।
जिसके दर से नहीं दूर दैरो हरम
कस्य तस्माच्च **संस्तूयतां शासनम्॥**

कृष्णनेत्रद्वयप्रान्तसंचारितं
कार्मणं कार्मुकोद्भूतबाणप्रभम्।
लक्ष्यता यस्य लक्षोद्भवैरर्जिता
कस्य तस्माच्च **संस्तूयतां शासनम्॥**

जुज़ू बे ईस्तादन् आहंगे रफ़्तन् मदान्
व,ज़ सकूतश जुज़ू आहंगे गुफ़्तन मदान्।
बा शुमा हर्फ़े असरारे उल्फ़त ज़नम्
तन्निषेधोऽपि **संस्तूयतां शासनम्** ॥

## २–मन्दाकिनी

पूता पीतपटाङ्घ्रिचुम्बनवशाज्जीवातुभूता विधेः
शर्वेणापि ससम्भ्रमं प्रणिहिता भूभृच्छिरःपूजिता।

त्रैलोक्याघहरी सकृत्पतनतो या भुक्तिमुक्तिप्रदा
दिव्या राजति राधिकानयनयोः सापाङ्गमन्दाकिनी॥

श्रीनाथाङ्घ्रिनखोद्भवा कमलभूलोके स्थिताऽप्युन्नते
प्राप्यापि प्रमथाधिपस्य प्रयतं गङ्गोत्तमाङ्गं ततः।
नाप्युच्चैःशिरसां शिरःसु विरता या स्वामिनो भूभृतां
नीचामुद्धृतये दयाविगलिता वर्द्धेत **मन्दाकिनी** ॥

## ३–किं कथ्यताम्

इष्टापत्तिरिवास्ति शासनविधिर्भव्यो वरस्तर्जनं
क्रोधस्सत्त्वगुणात्मकोऽनुगुणता यत्प्रातिलोम्यं तथा।
भूतिं लोकगतां ददद्वितरति श्रेयः परत्रापि यः
तस्यैतस्य गुरोर्विचित्रमहिमा विद्यो न **किं कथ्यताम्**॥

## ४–न कथमाः कथमाः कथमाः कथम्

अविकलं विकलं गमितं वृथा
जननमेव कदापि मनोऽकृथाः।
सजलनीरदनीलपदार्चनं
**न कथमाः कथमाः कथमाः कथम्॥**

प्रियतमोऽसुलभोऽथ विलक्षता
गुरुजनैः प्रसभं परिवारिता।
हतकरागमथापि बतात्यजं
**न कथमाः कथमाः कथमाः कथम्॥**

कृतकृता कविना कविताक्रिया
कलयता किल कीर्तिकुमारिकाम्।
कृतकता कथयस्व बहिष्कृता
**न कथमाः कथमाः कथमाः कथम्** ॥

## ५—दर्शनं दर्शनम्

प्रिये! नयनयातुना कथममपूर्ववत् शिक्षितं
समस्तमपरार्जिताविकलबोधविस्मारणम्।
त्वदीयमधुरध्वनेः श्रुतिमपास्य कापि श्रुतिः
श्रुतिं न प्रतिपद्यते किमपि **दर्शनं दर्शनम्**॥

## ६—पुनरुक्तिविरक्तिमुपैति मनः

परिवर्तनचक्रगते भुवने
भुवनेष्वपि कोऽस्त्यवशिष्ट इदम्।
अवधार्य भवोद्भवभोगगणान्
**पुनरुक्तिविरक्तिमुपैति मनः**॥

पुनरुक्तिरुदासयते रसनान्
नियमोऽस्ति, तथा हरिनाम्नि नहि।
रसपानपरं न कदापि यतः
**पुनरुक्तिविरक्तिमुपैति मनः** ॥

## ७—प्रमेयसिद्धिर्भवति प्रमाणतः

असावरूपो नयनैर्निरूप्यते?
स निर्विकल्पो मनसाऽनुमीयते?।
अनाहतो वा श्रवसाऽवसीयते?
**ऽप्रमेयसिद्धिर्भवति प्रमाणतः**? ॥

## ८—भगवति परितुष्टे सिद्धिलब्धिर्ममापि

जगति सकलकर्माण्यञ्जसाप्यस्य नाम—
ग्रहणबलविभावात् सिद्धतां यान्त्यशङ्कम्॥
भवतु कमलनेत्रे जातु नारायणेऽस्मिन्
**भगवति परितुष्टे सिद्धिलब्धिर्ममापि** ॥

## ६–शब्दशास्त्रमिह मेऽतिरोचते

पाणिनिप्रभृतिभिः परिष्कृतं
यद् वदन्ति वदनं श्रुतिस्त्रियः।
कामधुङ्निभममुत्र सम्मतं
**शब्दशास्त्रमिह मेऽतिरोचते** ॥

## द्रुतमुपेहि

मरालवरवाहने! विधिमुखाम्बुजन्मासने!
तुषारकरदीधितप्रचुरगौरगात्रप्रभे!।
सदक्षकरवर्तनक्षपितकश्मले! निर्मले!
करक्वणिततुम्बिके! द्रुतमुपेहि मामम्बिके!!॥

## सुन्दरकृष्णचन्द्र!

हे राधिकारमण! सुन्दर! कृष्णचन्द्र!
दूरीकरोतु हृदयाद् यदसुन्दरं मे।
वैकुण्ठ! कुण्ठितमनोभिरलब्धभूमे!
कुण्ठाकलङ्करहितं हृदयं विदध्याः॥

## नवोढेव वसतिः

सुधासंसिक्ताङ्गी विविधनवरागान्तरयुता
रसस्रोतोयुक्ता स्वजनसहिता निर्वृतिकरी।
गृहाभिख्यान्वर्थं जगति ननु लभ्येत कृतिना
मुकुन्दानन्दानां फलमिव नवोढेव वसतिः॥

## त्वमेका जानीषे

प्रिये! वेत्सि स्प्रष्टुं हृदयकुसुमारान् मृदुतया
स्वकीयाङ्गुल्यग्रैर्नखरखरघातैर्विरहितम्।
त्वमेका जानीषे मधुरवचनैः सान्त्वरचनम्
उपालम्भैर्हीनैर्हृदयदयिते! मानसशिशोः॥

## शाब्दिकगतिः

न जाने मूर्खत्वं स्थिरपदमितो यास्यति कदा
कविम्मन्यो घ्रात्वा कतिचन पदान्येव सुधियाम् ।
तपोभिर्दुष्प्रापां सततविषयासङ्गरसिकोऽ
—लसो यायात्कस्मादहमिव शुभां शाब्दिकगतिम् ॥

## सुप्रभातम्

त्वन्मुखोषसि गृहीतविकासोऽ
—प्याहितान्तररविन्दविलासः ।
त्वत्कपोलयुगलामलमलकान्तिर्
भानुरेष विदधातु शुभानि ॥

## मनसि विरते

मनसि विरते यावत्सौख्यं न तावदिह क्वचित्
भवति हृदये प्रेयोमूर्तेस्तदा प्रतिबिम्बनम् ।
सरसि विगतावर्तव्राते‍ऽभितोऽनिलवारणाद्
विकसति सुधावर्षी चन्द्रो यथा नयनोत्सवः॥

## त्वन्मयम्

इमौ कर्णौ वर्णावलिभिरभितः पूर्णकुहरौ
त्वदीयानां नाम्नां मम जपनमालास्तु रसना ।
समक्षं मे चाक्ष्णोर्नयनकमले केशव तव
प्रसीदेतां, चित्तं चरितमखिलं चिन्तयतु ते॥

## प्रधर्षणम् (देहल्यां दुरापन्नम् )

तवाङ्गलतिका शुभे! खलजनैर्विलुप्ता बलात्
समस्तमनुजत्वमप्यतितरामतो लज्जते ।

तथाकृतममानुषं पुरुषराक्षसैर्योषिता
यथा प्रकृतिरप्यसौ परमपूरुषाच् शङ्कते ॥

## सा सम्प्राप्ता

सा सम्प्राप्ता कुसुमसमयश्रीरिवास्माकमन्तः
शुष्कस्वान्तोपवनमखिलं योजयन्ती प्रसूनैः ।
दग्धुं सर्वा नवलकलिका धूमकेतुः परन्तु
भीष्मग्रीष्मः सपदि विततो दुष्टदिष्टादभव्यः॥

## अपराद्धता

अभिमुखं त्वदपाङ्गशरः कृतोऽ
भिनदलं स्खलितो हृदयं मम।
अयि नतभ्रु! शरासनचालने
तव दृशोः स्पृहयाम्यपराद्धताम्[8] ॥

## आर्जवं हि कुटिलेषु न नीतिः

कर्षणं तव कचेषु गृहीत्वा
चुम्बनं दृढतया वरमस्ति।
श्यामलेषु हृदयं हृतवत्सु
नार्जवं हि कुटिलेषु सुनीतिः ॥

8 क. क्षणे प्रसन्ना क्षणतो विषण्णा क्षणे च मुग्धा क्षणतो विदग्धा।
क्षणे नगण्या क्षणतोऽग्रगण्या जयत्यवर्ण्या गतिरास्तरुण्याः॥ (श्रीपरमानन्द कविवर्यस्य)

ख. शितकटाक्षनिपातनपाटवी मदभराम्बुजपर्णसुदृग्द्वयी।
मन इयं बलराम तवैव किं न ननु कस्य जनस्य विचालयेत्॥ (श्रीलोकेशकुमारस्य कवेः)

## मृगया

त्वां प्राप्य लोकाभरणानुभावां
कस्मै पुनर्यौवतमास्वदेत ? ।
शकुन्तलां प्रेक्ष्य मृगायताक्षीं
न वष्टि राजा मृगयां मृगीणाम् ॥

## विक्रमवर्षः

सप्ततियुक्तसहस्रयुगाङ्कं
वर्षमिदं निजविक्रमवर्षैः ।
वष्टु पराभवमिष्टभिदां वः
सार्थकयेच्च पराभवनाम॥

## जिजीविषा

मदीयमनसः शनैः सकलवासना हीयते
तरोरिव तपागमे प्रसवसंहतिः सर्वतः ।
समस्ततिथिचन्द्रमःसुमुखि ते मुखं वीक्षितुं
न गच्छति मनोरथो मम जिजीविषावद् हृदः ॥

## वसन्तपञ्चमी

वायुना किसलयेन कोकिला—
—पञ्चमेन कुसुमेन केकिना ।
पञ्चभिर्नयति मां तया विना
पञ्चतां बत वसन्तपञ्चमी ॥

## दीपिका

नीराजनामण्डलराजिता ते
ततोऽपि दीप्ता मुखमण्डलीयम् ।

पुरो विलुभ्यच्छलभावकीर्णा
विभाव्यतेऽसौ खलु दीपिकेव ॥

## दोहदवती

केवलेन मम चुम्बनेन या
पूर्यमाणनिखिलस्वदोहदा ।
ह्लादमानवदना विराजते
सा कवित्वसमये निवेश्यताम् ॥

## विकचपद्मिनीवैभवम्[9]

न बुद्ध्यति प्रगे प्रिया कमलकोशवत्पुष्यति
कटाक्षयति षट्पदद्वयमनोज्ञनेत्रैस्ततः ।
अनेन च विकास्यते हृदयपङ्कजान्यावयोस्
तनोति तनुजा गृहं विकचपद्मिनीवैभवम् ॥

---

9. परमकविना श्रीशङ्करराजारामवर्येण सुन्दरमुत्तरं प्रहितम्—
अमन्दनवचन्दनद्रवसुधार्णवस्वर्णदी
तरङ्गतनुशीकरप्रकरबन्धुरस्पर्शया ।
वयस्य पितृलोचनामृतशलाकया लीलया
तनोति तनुजा गृहं विकचपद्मिनीवैभवम्॥

# नमस्कृतिः

यणादिरिव योऽन्तःस्थः स्वरादिरिव चाव्ययः।
तमादिमपि भूतानामनादिकमुपास्महे॥

यं न पश्यति पश्यन्ती मध्यमा नापि मध्यमा।
तत्परापि परं वक्तुं वैखरी किङ्करी कुतः॥

शरीरव्यापिनः पश्चादन्तरव्यापि चान्तरम्।
स्नानादूर्ध्वं पुनः स्नानमिव कृष्ण! तवार्चनम्॥

उदात्तं देवताद्वन्द्वं राधिकाकृष्णचन्द्रयोः।
ममात्रामुत्र शरणं द्यावाभूमी इवानिशम्॥

माता प्रिया पिता प्रेयान् बन्धवः सुहृदः प्रियाः।
प्राणानामीश! हे कृष्ण! परं प्रेष्ठस्त्वमेव मे॥

पाणिने! कुरु तत्सूत्रं श्रीकृष्णेन यथा मम।
अप्रधानस्य वृत्तिर्मेऽसमर्थस्याव्ययीभवेत्॥

मज्जन्नपि न हि क्लिन्नोऽकलङ्कः कज्जलाकरे।
कदासङ्गाङ्गरागेणानुलिप्ताङ्गो भवाम्यहम्॥

आत्मभिन्नधिया कृष्ण! यास्तुभ्यं नतयः कृताः।
ता ह्रेपयन्ति मां, ताभ्योऽहमात्मानं क्षमापये॥

श्रीखण्डमुरसो देशे शिरीषं श्रोत्रयोरिव।
जिह्वायां शर्करा कृष्ण! त्वदीयं नाम कीर्तने॥

एषैव ते कृपा कृष्ण! नित्याराधनसत्फला? ।
विषयैः कृष्यतेऽद्यापि यन्मदीयमिदं मनः॥

मुखेन्दुः कृष्णचन्द्रस्य दृश्यतां दृश्यतां गतः ।
नामानि कर्णयोस्तस्य श्राव्यन्तां श्रव्यतावधि॥

सतृष्णं कामये कृष्णं वासनोद्वासनोचितम् ।
मा भूवन् कामनास्तृष्णा आशये वासनाशये॥

यद्यप्यभूवं श्रीकृष्ण! सुखेऽहं भूरिवल्लभः ।
परं दुःखे शपे स्वामिन्ननन्यहृदयोऽभवम्॥

उत्कण्ठय घनश्याम! नीलकण्ठं मनोमयम् ।
इहस्थोऽपि यथा पश्येत्त्वां चिदम्बरसंस्थितम्॥

विकुण्ठां कुरु वैकुण्ठ! रागयोग्यां मनोभुवम् ।
कामिनीकीर्तिवित्तादिदुश्चिन्ताभिरनुर्वराम्॥

गुरुः पटीयान् कोऽप्यन्यो यादवेन्द्र! नियोज्यताम् ।
पाठं प्रतिपदं भूयस्त्वन्नाम्नां वष्टि मन्मनः॥

त्वद्भक्ता भावसंसक्तास्त्वां नमन्तो मतौ मम ।
मां प्रणम्यतरास्त्वत्तो भान्ति कृष्ण! क्षमस्व मे॥

तव स्तोत्राणि मां कृष्ण! प्रीणयन्तितरां तथा ।
कृतानि स्युर्यथैतानि ममैव गुणवर्णने ॥

कृष्णानुभावाद्धासन्ते सत्योऽनुग्रा ममैषणाः ।
तथा मेऽक्षिप्तचित्तस्य यथा स्युः प्रतिवेशिनः॥

त्वत्केशकृष्णसर्पाणामीहायां कृष्ण! सर्पतः ।
मनो मनोरथानन्यान् मन्यते राजिलाधमान्॥

शौरिसूर्य! मुखेन्दुस्ते मङ्गलाय बुधेश्वरैः ।
गुरुभिः कविभिर्नित्यं मान्द्यह्रासाय सेव्यते॥

सहायात्कृष्णचन्द्रान्यादस्ति मे विमनो मनः।
सतीमपि न सहते सती दृष्टिं पतीतराम्॥

ममाप्याविर्भवेच्शौरिः स्मयमानमुखाम्बुजः।
पीताम्बरधरः स्रग्वी साक्षान्मन्मथमन्मथः॥

वर्णाश्रमकरः कृष्णः कृष्णद्वैपायनोऽथवा।
केवलौ ब्रह्मसूत्रस्य रचनाचतुरावुभौ॥

राधिकेव न चेत् प्रीत्या कुब्जिकेव रतेच्छया।
यथाकथञ्चिदालिङ्ग्य श्रीकृष्णं भूरिवल्लभम्॥

तथापि जायसे कृष्ण! प्रणयप्रवणं मयि।
तथापि व्यभिचारेण चिरात्संचरते मनः॥

कृष्णो जयति यस्यान्तः स्तिमिताऽखिलशुक्लता।
तथाकथितशुक्लानां कृष्णत्वं नो हरन्नरम् ॥

प्रश्नीकुर्वन्निजैश्चित्रचरित्रैरुत्तराणि मे।
मम जीवनप्रश्नानामुत्तरं जय माधव!॥

देवकीर्तिकुलाधारवासुदेवस्य जन्मने।
मन्मनस्तमसा पूर्णं कंसकारालयायताम्॥

नवद्वारे नवद्वीपाकारे दुस्तर्कसंकुले।
देहे श्रीकृष्णचैतन्यप्रादुर्भावोऽस्तु मामके॥

निवृत्तेऽपि न निर्वृत्ते रक्तबीजाङ्कुरप्रभे।
विषये सेन्द्रियाणां मे रक्षतात्कालिकाम्बिका॥

कामाख्याम्बापदद्वन्द्वसौन्दर्यं विवृणोतु कः।
यत्सन्निधानादसमा सुषमास्त्यसमे समे॥

यस्य प्रकाशमासाद्य प्रकाशोऽपि प्रकाशते।
अन्धकारोऽन्धको यस्य स काशीशः प्रकाशताम्॥

प्रार्थ्यते दक्षिणामूर्तिः श्रीगुरुर्भूरिदक्षिणः।
यदस्माकमसद्वृत्तं न नः शिष्येषु सर्पतु॥

ईप्सितो वारणार्थानामरिष्टस्याशिवङ्करः।
भवो रुद्रस्तथा शर्वः सर्वान् मृडयतादलम्॥

बर्हिबर्ह! न जानेऽहं वेदान्तात् ते किमन्तरम्।
स्कन्द उन्नीयते यस्माद् द्वाभ्यामपि षडाननः॥

कथं मे स्यादसाफल्ये साफल्ये वा क्वचिद् व्यथा।
त्वदिच्छासमनुप्राप्तमिति सप्रीति पश्यतः॥

अहेतुहसने हेतुरकृत्योत्साहने कृती।
मानसोन्मादनेऽमन्दो मदनो मुदमाप्नुयात्[10] ॥

**(युग्मकम्)**
क्रन्दनं वन्दनं यत्र रोदनं तनुशोधनम्।
कीर्तनं कीर्तनं विष्णोर्नर्तनं दर्पकर्तनम्॥
गानं पुण्यजलस्नानं ज्ञानं भजनमाश्रितम्।
श्रीकृष्णः कृष्णचैतन्यस्तन्मतं वष्टि मन्मतम्॥

**(विशेषकम्)**
पवित्रं छन्दसा तुल्यं यत्सूत्रं ब्रह्मसूत्रवत्।
स्थाप्यते हृदये नित्यं तस्मै पाणिनये नमः॥
मुखस्था क्रियतेऽस्माभिरार्षी या प्रत्यहर्मुखम्।
अष्टाध्यायी तपःसिद्धा गायत्रीव पुनातु नः॥

---

10 क. आप्नुयाच्चेद्भवद्राज्य अकृत्योत्साहको मुदम्।
क्व तदान्यो भवेद्द्वयः क्व वा यायाद् विवेकिता॥ (कविवरस्य श्रीप्रदीपशुक्लस्य)
ख. आरामः प्रीतिबन्धानां विरामः सर्वसंविदाम्।
अभिरामस्त्रिलोकानां काम एवाधुना प्रभुः॥ (श्रीमत्परमानन्दकविवर्यस्य)

तत्तद्धितानि रचयन् स्वार्थं पश्चात् क्षिपन्नसौ।
लाघवैर्गौरवं प्राप्तः स जीयात्पाणिनिर्मुनिः॥

प्रीयतां प्राकृता वाणी प्राक्कृता साम्यवादिनी।
गृहीता पूजिता सर्वैर्बद्धैर्बुद्धैर्बुभुत्सुभिः॥

वामलूरोद्भवं वन्दे वाल्मीकिं दीर्घभूरुहम्।
दुर्दर्शोऽपि यमारुह्य दृश्यते रावणद्विषन्॥

आविर्भावयतोऽन्येभ्यो नैकान् सन्ततमात्मनः।
कुर्वाणस्यात्मवच्छिष्यान् कोऽधिरोहेद्गुरोस्तुलाम्॥

शुद्धान्तरङ्गनिरतः सन्नप्युत्सन्नकल्मषः।
शुद्धान्तरङ्गविरतो विचित्रो भाति नो जिनः॥

दयानन्दाम्बुदो गर्जन् सद्वादगगनस्थितः।
पाखण्डदावदग्धाया धरित्र्यास्तापनाशनः॥

चण्डांशुजास्थनागोत्तमाङ्गरङ्गे प्रचण्डताण्डवकृत्।
आखण्डलमदखण्डन! खण्डितमायाहि पण्डित प्रेम्णः॥

श्रीकृष्ण! भाग्यलक्ष्म्या भवत्नैवं योजिता यथास्माकम्।
आपत्पदा अवाच्या वाच्या दोषा गुणायन्ते॥

आत्मानमर्पयेऽहं भवदीयपदारविन्दमूलेषु।
उपकृतिनिष्कृतियोग्यं नैवात्मनि किञ्चिदपि पश्यन्॥

यो विन्द्यत आनन्दोऽस्माभिस्तं तु प्रतिप्रतीति।
चार्वाकश्चर्वयितुं शाक्यः शक्नोति नैव शातयितुम्॥

# अधिकाव्यम्

अनभ्यासाद्यदासीन्मे भ्रंशमाना सरस्वती।
मुग्धत्वाच्च लघुत्वाच्च अनुष्टुब् हस्तमागता॥

कविता क्रियते नैव जातु, सा तु प्रतीक्ष्यते।
नियोज्या जायते नैव प्रतिपाल्या प्रियागतिः॥

मदीयकाव्यरत्नानाम् उद्भासप्रतिभूरियम्।
शाणपाषाणयुगली त्वत्कपोलस्य भासताम्॥

तव मुग्धवचो मातस्! सदा कर्णोऽवतंसयेत्।
यस्य सौन्दर्यसौभाग्यात् कविता मम लज्जते॥

उत्पत्स्यमानकविता व्याकुलीकुरुते मनः।
कवेरापन्नसत्त्वस्याप्यहो! तद्व्ययग्रचेतसः॥

मदीयकाव्यसौन्दर्यरहस्यमिदमादिमम्।
श्रावये सुन्दरीः पूर्वं पण्डितांस्तदनन्तरम्॥

भोगैश्वर्यप्रसक्तानां कथं मनसि भासताम्।
कवितापुत्रिकाजातिसौरभ्यं सुकवेरिव॥

विलोप्याशेषमात्मानं विचाराम्बुनिधौ, मया।
नास्ति सर्गोऽयमुत्सर्गोऽधिगतो मुक्तकव्रजः॥

भूयो दर्शयते माद्यन् भूयः पश्यति चुम्बति।
कविर्हृष्टो नवोत्पन्नां कवितां पुत्रिकामिव॥

व्युत्पत्ताविष्यते यत्नो कामं शक्तिर्निसर्गजा।
यथा प्रेम्णि प्रकृतिजे यतनं रतिकर्मणि॥

तद्विकल्पैर्मषीकल्पैर्निश्शेषं पूरितं मनः।
पृष्ठेषु तत्परीवाहः काव्यत्वेनोपसर्पति॥

मदीयहृदयेऽदभ्रा भ्राजते काव्यसंसृतिः।
कवितानगरी ग्रन्थे तन्निष्यन्दैर्निवास्यते॥

भूमिका नवकाव्याय प्राप्यतेऽनुकुमारिकम्।
मोघप्रेमप्रसङ्गानां संग्रहे काव्यसंग्रहे॥

दरिद्रेहैव कविता ममाप्यल्पश्रुतेर्बत!।
शब्दमात्रैरुपक्रान्ताप्यर्थाभावान्न पूर्यते॥

स्वल्पालङ्कारसन्तुष्टा स्तोकवक्रोक्तिसंस्तुता।
दारिकेव दरिद्रस्य सुवृत्ता कविता मम॥

संप्राप्य संस्कृतं काव्यं धन्यं मन्यस्व केवलम्।
देवलोकस्य मुद्रैषा भूलोके न चलिष्यति॥

निर्माल्यभूतं वाग्देव्याः कल्पसूनसमाकृति।
वासयेत् सकलं लोकं काव्यजातं ममाञ्चले॥

न लेखन्यां न वा पृष्ठे न यन्त्रे माति नापणे।
या त्रिलोक्यन्तविश्रान्तिसमर्था कवितोर्ज्जिता॥

सदर्थान् यूथविभ्रष्टत्रिदिवद्विजसुन्दरान्।
शब्दानायं नये नित्यं कविर्नाहं शकुन्तिकः॥

अनन्यचित्तोऽहं काव्यकरणेऽथ प्रतीक्षणे।
कृतं कार्यान्तरं सर्वं मया मन्ये भवान्तरे॥

दोषः स्वशब्दवाच्यत्वं स्वदोष्णोद्भाव्यते मया।
काव्यं करिष्यता पश्याधिकाव्येऽधिकमुच्यते॥

दुःखितेनापि कविना रचिता कविता, सदा।
सुखितान्येव कुरुते जनतामानसान्यहो॥

तथा मदङ्गमालिङ्ग्य परिचुम्ब वराङ्गने!।
रदनच्छदरक्तिम्ना यथेन्धां कवितानलः॥

वच्म्यहं सुन्दरीः सर्वास् 'तुभ्यं काव्यं कृतं मया'।
स्वयमेव न मे ज्ञातं कृतिः कस्यै कृता मम॥

प्रशस्ताः कविताः कामं रसज्ञैरखिलैर्मम।
परं यस्यै कृता एताः सापीहे शृणुयादिति॥

असोढापरसम्पर्का तिष्ठासन्ती परिष्वजे।
सुकवे रागिणि स्वान्ते कविता प्रेयसीप्रभा॥

हा हन्त हतसंसारशुष्कानुर्वरभूमिषु।
कविताकोरकाली मे प्रस्फुरन्त्यपि शुष्यति॥

कविते! त्वामुपासीनं ममानन्यमनो मनः।
स्वस्मिन् जिज्ञासते कीदृक् तव रागो विजृम्भते॥

सस्पृहं वीक्षितौ सर्वैरलब्धमधुराकृती।
शब्दार्थौ सत्कवेरुच्चैः कुलस्त्रीणां कुचाविव॥

दिष्ट्या ममार्थगाम्भीर्यं शब्दाः संवोढुमक्षमाः।
रहस्यानि समस्तानि गोपितानि स्थितानि मे॥

जानीयान्मे प्रतिद्वन्द्वी यदि मे प्रतिभोत्थितम्।
कविताशेवधिं, नूनं भस्मीस्याद् ज्वलदीर्ष्यया॥

कवितासुन्दरी मत्तः सुन्दरीव जुगुप्सते।
अनुधावामि निर्लज्जः कविम्मन्यो विटोपमः॥

गाढस्त्यानरसाधिक्यरुद्धा तत्रैव सीदति।
कविता मम यन्त्रस्था बहिरायातुमक्षमा॥

हन्त मे वणिजः क्रय्यं क्रेत्रभावे विषीदति।
संस्कृतं पारसीकं च काव्यं मुग्धत्वमेव च॥

काव्यार्थगौरवं कष्टं चतुष्पादा ह्यनुष्टुभा।
ममोह्यते, विशङ्केऽहं क्रूरोऽयमिति भर्त्सनाम्॥

आत्मजा कविता कामं पालिता हृदयासृजा।
व्रजन्ती गेहमन्यस्य कथमेषा निवार्यताम्॥

परस्परं विराजन्ते दीपयन्ति परस्परम्।
स्नेहिनः सुदशा धन्याः कवयो दीपकास्तथा॥

पारसीकादिसाहित्यसमुद्रान्तात् समुद्धृतम्।
काव्यरत्नज्ञसंघेषु सार्घं भवतु मुक्तकम्॥

पारसीं बुध्यते मुग्धां पारस्यः सावगुण्ठनाम्।
विस्रस्ततनुरेषा तु विप्रैः प्रौढिं तनोत्यलम्॥

कवितापुत्रिकाजात्या कवे! दिष्ट्या प्रवर्धसे।
पितृत्वं प्राप्तवांश्चित्रं विना परिणयादपि॥

अन्तरामोदिनी कर्तुर्विनापि करपीडनम्।
कवितापुत्रिकाजातिः पितृत्वं मेऽभिनन्दति॥

कविताकामिनीकान्तकटाक्षान्ता.जयन्तु ते।
यैरहं शुष्कतर्काढ्यशास्त्रजालान्निवारितः॥

वृत्तमानुष्टुभं वृत्तं जातिरार्याप्यजायत।
परं दुर्वृत्तकन्दर्पवृत्तं न निरवर्तत॥

नैवार्हन्ति विचाराः सर्वे कवितापदं समधिरोढुम्।
श्रीखण्डमेव काष्ठं लभते सुतनुस्तनस्थानम्॥

सुकवेर्हृदयद्वारं कवितावनितैत्य खटखटाकुरुते।
रिक्ते सकलविविक्ते रसपरिषिक्ते च कर्हिचित्काले॥

# शृङ्गारासारः

पश्यन्त्यपि घनश्यामम् उरस्तः स्रस्तमंशुकम्।
यदीशिषेऽवधातुं तद् निन्द्यतां विदुराङ्गना॥

चिन्तनाच्चित्तमात्मा च प्रिये कृष्णस्य ते तथा।
आभात्युभयमभ्यक्तं चन्दनेन हरिद्रया॥

'कालात्पूर्वं विधेरूर्ध्वं प्राप्यते नैव केनचित्'।
त्वां प्राप्य विहितं मोघम् इदमाभाणकं मया॥

घुष्यतां नानयेत्कश्चित्पुष्पगुच्छान् ममालयम्'।
अत्र तत्स्मृतिगन्धेनामोदिताः सर्वभूमिकाः॥

मुखं ते पद्मचन्द्रादितुल्यमित्येकदेशिनाम्।
मतमत्र तु सिद्धान्तस्त्वन्मुखं त्वन्मुखप्रभम्॥

यावद्वाच्यमवाच्यं स्यादुच्यतां तदनन्तरम्।
प्राक् परं त्वां प्रशंसेयं मनोहत्य मनोहरे!॥

बद्धाग्रहं ग्रहज्ञा मां वक्रदृष्टिः प्रियाऽब्रवीत्।
'सद्यस्त्वाम्मारयिष्यन्ति वक्रदृष्टियुता ग्रहाः'॥

तथाषाढधरस्यासौ श्रवणे श्रावणोऽब्रवीत्।
स यद् व्रतस्य भद्राय कृत्तिकापुत्रमस्मरत्॥

तन्मुखं चन्द्रतुल्यं चेत् कथ्यते कविभिस्ततः।
तयोः साधारणो धर्मो न सौन्दर्यम्, अलभ्यता॥

चुम्बितं मुखचन्द्रस्थं चन्द्रहासानुजं मया।
प्राणान्निभाल्य पाणिभ्यां तीक्ष्णवक्रभ्रुवोर्युगम्॥

अद्यत्वे स्नेहिनां मृत्यून् स्फुटं दृष्ट्वा प्रतीयते।
यमस्याप्यधिभारोऽस्ति गृहीतो विषमेषुणा॥

यदान्यदीपिकाभ्यो मे शलभो लुभ्यते तदा।
दहतीर्ष्याद्विगुणिता दशा मम दशां मम॥

तिलं दृष्ट्वा मुखस्थं ते सर्वेभ्योऽपि तिलोदकम्।
सिक्तं , त्यक्तं च दाक्षिण्यं वामत्वं तव पश्यता॥

**(युग्मकम्)**
माणिक्यौष्ठीं मौक्तिकाभां प्रवालचरणच्छटाम्।
ईषन्मरकतश्यामां पद्मरागानुगाधराम्॥
वज्रदन्तावलीकान्तिमिन्द्रनीलासितालकाम्।
अङ्गैर्धृत्वा प्रियां सम्यग् विमुक्तोऽस्मि ग्रहग्रहात्॥

श्रूयते सूर्यसम्पर्काच्चन्द्रमा वर्द्धतेतराम्।
मदीयभाग्यसूर्यस्ते मुखेन्दुमनु वर्धते॥

उद्यदुच्छ्वासधूमेन कुचाचलविचारिणा।
मया सम्पश्यता स्वार्थं रागाग्निर्मीयते स्फुटम्॥

वामेऽतिवामं वामं ते दक्षिणं चातिदक्षिणम्।
अत्यूर्ध्वेन त्वदूर्ध्वेन पश्य मामधरीकृतम्॥

वेधा द्वेधा विधायेन्दुं अर्धाद्भालं तवाकरोत्।
चूर्णयित्वाऽवशिष्टार्धं समग्रेऽवयवेऽलिपत्॥

अपूर्वेऽपश्चिमे मध्यं न केवलमनुत्तरम्।
सुमध्ये दक्षिणं वामं तव सर्वं सुदक्षिणम्॥

यूथिकामल्लिकाचम्पा अदृष्टे भूरि पश्यताम्।
तवाङ्गे सज्जते दृष्टिः पारिजातप्रभायुते॥

**(युग्मकम्)**
वचनेषु सुधाधारां पारिजातप्रभां मुखे।
ऊरुष्वैरावतौदार्यं लक्ष्मीमखिलवक्षसि॥
समस्तविग्रहाभोगे भजन्ती चन्द्रमःप्रभाम्।
विद्ध्वा सविषनेत्रैर्माऽधरैर्धन्वन्तरीयसि॥

अङ्गेऽनङ्गेन ते सर्वा निहिता कमलालया।
कमलाक्षो मृगयते कमलां कमलालये॥

आकर्णपूर्णनेत्रायाः पूर्यते नेत्रयोः स्मृतौ।
कर्णिकारकरम्बाणां गन्धैर्नासापुटं मम॥

मदीयसूर्यचन्द्रादिस्त्वदीयमुखमण्डले।
ग्रहविग्रहहीनास्ति ममाखण्डापि कुण्डली॥

कामेन राज्ञा वामेन गण्डमण्डलवर्तिना।
दुःशासनमनुज्ञातं पीडायै प्रेयसामहो॥

भाले पादरजस्त्वत्तो गले त्वन्नाममालिका।
त्वत्केशसूक्ष्मसूत्राणां यज्ञसूत्रं द्विजस्य मे॥

त्वद्विकल्पस्य सूत्राणि यज्ञसूत्रमिवात्मनः।
मया संस्थाप्यते पूतं संकल्पेन सता मया॥

बुधेन कामदेवेन प्रेमसूत्रेण मे त्वयि।
सर्वदेशोऽश्रुणोऽकारि निद्रास्थानेषु नेत्रयोः॥

नामानि ते गृहीतानि तथा संयान्ति विग्रहम् ।
जलं जलाशयापन्नां लवणप्रतिमां यथा॥

सम्यग्दृष्टो भवेत्प्रेयानदृष्टाऽहं तथा जनैः ।
तादृक् स्थानं विचिन्वाना विचेतव्यास्ति कामिनी॥

अहर्निशाभनेत्राणां नेत्राणां विरहान्मम ।
जाग्रतोऽहर्निशं नेत्रेऽनुदिनं क्षिणुतो बत॥

यन्नामगोत्रप्रसरो निःश्वासोच्छ्वासपूरकः ।
स कथं गोप्यतां लोकाद्दुष्करी नः स्थितिः स्थिता॥

प्रयोगान् द्रष्टुकामा मा रङ्गं याहि, नटावलेः ।
लोकलोचनहारिण्या त्वया हानिर्भविष्यति॥

रतिः कामोपदिष्टा ते व्यक्तालक्तकरक्तिमा ।
नृत्यन्ती गण्डयुगले, मुग्धो रङ्गं प्रयातु कः॥

अतितीव्रप्रभाजुष्टमुखे मे सुमुखीजने ।
निविष्टनेत्रयुग्मस्य नेत्रयोः क्षरति प्रभा॥

आहितं नेत्रसूर्याय माणिक्यमधरात्मकम् ।
आमुक्ता मुखचन्द्राय दन्तमुक्तावली मुखे॥

कृष्णाक्षि तेऽक्षियुग्मं मे भाति कृष्णमुखाकृति ।
चित्तवृत्तिर्जगद्यत्र पश्यत्यानन्दसङ्गिनी॥

दशानङ्गदशादर्शि दशमीचन्द्रचारु ते ।
निटिलं, पञ्चबाणेन विद्धं विद्धि खपञ्चकम्॥

प्रियान् प्रियतरांस्तन्वन् वियोगः कथमप्रियः ।
मता तान् सन्निकर्षन्ती निकृष्टा विप्रकृष्टता॥

(कुलकम्)

कथं वदनभानुस्ते न वियोगतमोऽपहः ।
कथं नयनचन्द्रस्ते न संयोगामृतप्लुतः ॥
कथं स्वप्नप्रदा नास्ति कचराशिविभावरी ।
कथमुन्नायको नास्ति कुचशैलकुलोद्वहः॥
दन्तमुक्तावली कस्माद्दारिद्र्यान्नापकर्षति ।
चित्तकाटवमाहन्ति कथं नाधमाधुरी॥
न विस्मारयतः कस्मात्कपोलावपि वाटिकाम् ।
नावधीरयते कस्माद्गलोऽमलविपञ्चिकाम्॥
कथं श्रयति मद्देहं न ते बाहुलतायुगम् ।
कराब्जं किं न कुरुते मनोभ्रमरसंग्रहम्॥
नाभिर्नाभिश्रितानां किं नोऽभिज्वालं विहन्ति, किम् ।
न शून्यमन्यसंकल्पैः कुरुते कटिशून्यता॥

(विशेषकम्)

त्वन्नेत्रसूर्यचन्द्राभ्यां भ्राजते मे दिवानिशम् ।
मत्सौभाग्यकथातन्तुः केशवत्तव वर्धते॥
प्रत्यूषमेति मे वक्त्रमधरेणारुणेन ते ।
गद्याभं जीवितं पद्यं जातं त्वद्गलसंगमात्॥
समीभवति ते दीर्घैर्वक्रग्रहगतिर्भुजैः ।
आपद्व्रय आपतद्व्रयो मे शरण्यं त्वत्पदं पदम्॥

(विशेषकम्)

निरूपणाय रूपाणां प्रदत्तं नेत्रयोर्युगम् ।
श्रुतीनां श्रुतये दत्तं तावकीनां श्रुतिद्वयम्॥
त्वद्वचश्चारुतां वक्तुं वाचि मे वक्तृताहिता ।
त्वन्नाम्नां नाम सारस्यं रसना रसनाय मे॥
प्रतिक्षणपरिस्फूर्तासंख्यसौन्दर्यसंभ्रमम् ।
मातुमक्लिष्टसामर्थ्यं प्रदत्तं चञ्चलं मनः॥

(कुलकम्)

श्लोकमेकं चिकीर्षामि युग्मकं किन्तु जायते।
विशेषकं भवति तद् युग्मकं चेच्चिकीर्षितम्॥
विशेषके कर्तुमिष्टे वृद्ध्या याति कलापताम्।
अनुमानातिगं रूपं तवानुक्षणवृद्धिमत्॥
काव्यकोटिषु पूर्वासु माति नैवातिसुन्दरि॥

पीडिताः पीडयन्त्यन्यान् दुःखिता दुःखयन्त्यपि।
हरज्वालितसर्वाङ्गोऽनङ्गोऽङ्गं ज्वलयत्यलम्॥

यदा स्फुरति सा रात्रिर्मद्यौवनसखीसखी।
निजस्त्रीगमनं तर्हि परस्त्रीगमनायते॥

नवनीतनिभे तेऽङ्गे बद्धा दृष्टिर्न सर्पति।
यतमानोऽपि बहुधा यथाहिर्मसृणे तले॥

भ्रूभ्यां धनुर्भ्यामलकैः पाशैर्बाणैरपाङ्गकैः।
स्फुटं प्रतीयसे चण्डि! कुलादायुधजीविनाम्॥

प्रत्युक्तिश्श्लोकति त्वत्का प्रश्ने मे दण्डकायिते।
महाकाव्ये मदुत्पन्ने मुक्तकं तव जायते॥

सुवृत्तनासिकाभूषा दुर्वृत्तं मां व्यधात्तव।
अवतंसः श्रुतेस्तेऽसावतिश्रुतिपथं तथा॥

माणिक्यानाम्महार्घत्वमधरैरधरीकृतम्।
हृतानि मुक्तामूल्यानि वदन्त्या दन्तपङ्क्तिभिः॥

दिष्ट्या त्वदङ्गसोदर्यसौन्दर्योन्मादितं जगत्।
एकस्यासंयमारोपो मम मन्दीकृतो यतः॥

वाटिकाजातपुष्पेभ्यः केवलं नास्ति ते स्पृहा।
तुभ्यं सतृष्णाः पुष्पाणामपि प्राणाः प्रियाधिके॥

कुण्डल्यां मत्प्रियस्थानं कुत्रास्ति ब्रूहि दैशिक।
त्यक्तान्यैकादशस्थानं तत्रैवास्तु यथा मनः॥

मुक्ता त्वत्कर्णिकाबद्धा मुक्ता संसारबन्धनात्।
मुमुक्षन्तो वयं बद्धा एतद्बद्धदृगञ्चला॥

इतस्ततः समागम्य परिवार्यावनम्य च।
तथा वर्षति मां प्रेयान् नवाभ्रो पृथिवीं यथा॥

दिनानि वज्रकान्तीनि निशो मरकतप्रभाः।
अहोरात्रमहो! तस्य स्त्रीरत्नस्य प्रभावतः॥

चञ्चन्त्यश्रूणि नेत्रेषु तुदन्त्यो हृदि वेदनाः।
वाच्युज्ज्वलानि काव्यानि सर्वं त्वद्दत्तमस्ति मे॥

त्वदीयदिव्यसौन्दर्ये प्रीतिमव्याहतामिमाम्।
साधनाय सहे देवि दिव्यानि सकलान्यपि॥

व्यापारितानि नाक्षीणि कुलीनत्वादिमानि मे।
तथापि मन्मनश्चक्षुस्त्वन्मुखे भ्रमरायितम॥

निष्कारणं निराबाधं नितरां च निरन्तरम्।
तथाऽहं त्वयि स्निह्यामि यथा कश्चिन्निजात्मनि॥

स्वहस्तं देहि मे हस्ते निर्दिशामि यथा मम।
त्वां दृष्ट्वा कुत्र कुत्राङ्गे व्यथोत्तिष्ठति सुन्दरि!॥

आवामेकस्तथा स्याव यथा नावन्तरे प्रिये!।
तृतीयो न भवेज् जातु द्वितीयः कश्चिदागतः॥

जायते मद्दिनं सर्वं त्वन्मुखेन्दुप्रबोधितम्।
विद्यते न ममाग्रे तु दिनेशस्य दिनेशता॥

सूक्ष्मावग्राहिणी बुद्धिर्मम जाता, निरन्तरम्।
त्वदीयमध्यसूक्ष्मत्वविचारपरचेतसः॥

निखाता विरहस्थूणा यां व्रजन्त्या तया हृदि।
तस्या उद्भिद्यतेऽजस्रं कविता रुधिराकृतिः॥

सूक्ष्माङ्गीं तीक्ष्णवदनामनन्तजनसंकुले।
लोकेऽन्विष्याम्यहं लुप्तां प्रियां सूचीं बुसेष्विव॥

पीयूषपाणिना येन भिषजा जीविता जनाः।
हन्त! कान्ताननायोगो हन्ति तस्यैव माऽनिशम्॥

वद शास्त्रविरोधीदं रहस्यं सौम्य देशिक!।
मुखामन्देन्दुरपि ते मयि क्रूरायते कथम्॥

शनिं शमयता येन जनता जीविताखिला।
मुखेन्दुमुद्दीपयता मम तेन हृतश्शमः॥

अस्माकं संप्रदायस्य नीतिरस्ति विनम्रता।
वञ्चितोऽपि त्वया नाहं क्रूरचित्ते शपाम्यतः॥

दत्तं कटाक्षमेणाक्ष्या कवये मह्यमुज्ज्वलम्।
तस्य निष्कृतये मत्तः सा नव्यं काव्यमर्हति॥

सञ्जायते यथारामो युवा वासन्तवायुना।
संजीव्यते तथा रामारम्यवाचा मनो मम॥

स्वस्माच्छुचितरे स्वच्छेऽप्यन्येषां प्रतिबिम्बकः।
रमणीमुखबिम्बेन दर्पणः प्रतिबिम्ब्यते॥

स्मितेषु सूत्रतुल्येषु सारवत्स्वल्पकेषु ते।
भाष्यायन्ते विकल्पा मे चिरोहापोहपूरिता॥

येन केन त्वदन्येन न तृप्तं हृदयं मम।
दिष्ट्या स्वस्यान्तरङ्गत्वममुना साधु साधितम्॥

सिद्धं त्वद्भिन्नसाहाय्यारब्धकार्यं न मे मनाक्।
विद्धं न विधियोगान्मे व्रीडाबाणैरिदं मनः॥

पूर्णिमाचन्द्रवक्त्रेति स्तुवते मे तु पूर्णिमा।
एकादशी कृता हन्त रूपगर्वितया तया॥

महानसान्निवृत्तायाः स्विन्नवक्त्राम्बुजन्मनः।
ज्ञायते रूपलावण्यं कान्तायाः प्रतिचुम्बनम्॥

सौभाग्यपूर्णिमैतर्हि प्रतिरात्रि प्रतीयते।
सर्वैस्सतृष्णं सन्दृष्टश्चन्द्रो यन्माभिदृष्टवान्॥

पञ्चतन्त्रकथा नास्ति वियोगरजनीकथा।
शतग्रन्थैर्नु जायेत तदेकाध्याययोजना॥

वैदिकैर्लौकिकैर्वापि शब्दैर्दुष्करवर्णने।
तदीयामन्दसौन्दर्ये तूष्णीं तिष्ठत शाब्दिकाः!॥

रामादिरूपसंसिद्धौ कृतार्थस्य तवाबुध!।
रामाद्यरूपसंप्राप्तावहो हन्ताकृतार्थता॥

तारुणीप्रक्रमावस्थाऽनवस्था किल दृश्यते।
कलिकोत्कलिकां पश्य याऽलिं कालयते स्वयम्॥

त्वत्पादचुम्बनेहा मां तथाहन् प्रमदे यथा।
यत्सूनां सर्वतः लक्षलाक्षारण्यं प्रजायते॥

त्वां नेहते मनो द्रष्टुं छाययापि समायुतम्।
हे सूर्य! मन्मुखाब्जस्य पश्य सन्देहदिग्धताम् ॥

आगत्योद्धर बाहुभ्यामेतास्ते स्मृतिपल्वले।
गावः गाव इवास्माकं सीदन्ति प्रमदोत्तमे!॥

प्रेमस्थेमेव सततं वामः कामोऽपि मन्यते।
अहो मेऽर्धाङ्गिनी यत्र वासना अप्युपासनाः॥

रात्रौ संजातसंरम्भः क्रव्यादः कामिनां तथा।
पञ्चबाणपिशाचोऽसौ देवत्वे कैर्निधापितः?॥

अष्टाङ्गहृदये नास्ति हृदये मम या व्यथा।
वाग्भटो मयि संवृत्तो हन्त केवलवाग्भटः॥

चित्ते स्फुरति शम्पेव तन्वी विरहदुर्दिने।
आसाराः शून्यनयनाद् आशा मलिनयन्त्यलम्॥

दर्शनद्वयनिर्वाणं त्वां मन्ये चारुदर्शने।
अयथादर्शनं नैतद् दर्शनेनात्मनः शपे॥

त्वां दृशोः पुत्रिका पुत्रि! शिक्षयेद् रूपदर्शनम्।
न जातु पश्यत्यात्मानं पश्यन्ती सममात्मना॥

प्रेयसे सर्वसंहोत्रा बलिना वामनीकृता।
शुक्रनीतिर्न जानीते प्रेमनीतिं कदाचन॥

चन्द्रमुख्या यतो मुख्यकृपार्होऽस्मि ततो मम।
वर्तते जन्मकुण्डल्यां केवलेन्दुमहादशा॥

अपि केनापि कुत्रापि दग्धोऽप्येष कदाचन?।
येनानङ्गेन मेऽङ्गानि दन्दह्यन्तेऽत्र साम्प्रतम् ॥

कटाक्षमपि यैणाक्षी प्राणेभ्यः सम्प्रयच्छति।
मच्चित्तस्याल्पवित्तस्य हा तदालिङ्गने मतिः॥

स्नातोत्थितायास्तन्वङ्ग्या लावण्यं लवणाम्बुधेः।
प्रतीयते प्रतिपलं चुम्बनेष्वतिवर्धितम् ॥

दिवा दिवाकरस्पर्धि तेजस्ते मुखमण्डले।
तेनातियापिता ब्रूते दोषा दोषाकरानने[11] ॥

पद्मा पादौ हरेरह्नि मृद्नन्ती दृश्यतेतराम्।
रात्रौ रतान्ते तत्पादौ हरिर्मृद्नन्न दृश्यते ॥

अस्ति दुर्दैवदूनानां सुधापि विषमा विषात्।
समीरणो जगत्प्राणो हन्ति मां विप्रयोगिनम् ॥

मत्पौरुषेण सन्तुष्टा पत्नी मुग्धा न बुध्यति।
सन्धुक्षयति संवेगं कासां रतगता स्मृतिः ॥

प्रेमपुत्रोत्सवे तन्व्याः कुचदुर्गनिवासिना।
राज्ञानङ्गेन सानन्दं बन्धनान्मुच्यते कचः ॥

याभ्यः स्वर्गाङ्गनाङ्गीभ्यो धर्म आचर्यते बुधैः।
अधर्ममाचरन्त्यस्ताः कथं कस्माच्च बिभ्यतु?॥

विश्लेषखेदं ते कान्तेऽपराभिः शमये कथम्।
अपि तीव्रतृषा जातु रथ्यापाथो न पीयते ॥

---

11. कवीश्वराणां रचनासु मज्जनादवाप्तरत्नानि पुनः स्वमेधया।
समुज्ज्वलीकृत्य निवेश्यते त्वया स्वकीयकाव्येषु अहो विदग्धता॥
क्व वाद्य दृष्टं व्यसनं महाद्भुतं क्व वेदृशं काव्यकलासु कौशलम्।
प्रवर्धतां नूतनवत्सरेऽपि तत् सरस्वती सारवती च ते भवेत्॥ (कविवरस्य श्रीप्रदीपशुक्लस्य)

सुदत्यास्तु रुदत्यास्तद् रुदति प्रवसत्पतौ।
हर्षाश्रुणा विवर्तन्ते शोकाश्रूण्यात्मगौरवात्॥

तस्यान्तरङ्गवेत्तृत्वे कत्थमानां सखीमुखे।
मुग्धां हसति तां गूढमपराणां परम्परा॥

पूर्णबिम्बफलस्पर्धि यद्यर्धमधरद्वयम्।
मम नाम्नो वदेज्जातु जातिर्मे पूर्णतामियात्॥

चित्रवल्लिखितान् दृष्ट्वा द्रष्टॄन् मा गर्वमावह।
चित्रकर्त्रि! निजालेख्ये, ते त्वद्वर्णहृतान्तराः॥

उद्विजे क्रमणाद् भूयो व्यतिक्रान्तपथे, पुनः।
प्रेमा मा न नवीकुर्यात् सुकन्ये! च्यवनं यथा॥

मदीयविरहग्रन्थो भारतादपि भारवान्।
गणेशोऽगणयन्नैव हा! तदुद्बन्धनार्थनाम्[13] ॥

वर्तते जन्मवद् दभ्रो संयोगदिवसस्ततः।
वर्धते वैरही रात्रिः केशवत्तव केशव ॥

वाचाकृष्य कचैर्बद्ध्वा न्यवधीर्नयनैरलम्।
मय्यङ्गने! तवाङ्गानामहो सम्भूयकारिता[14]॥

---

12. न्यञ्चत्सु सहकारेषु मधुना मधुनाऽधुना।
सुतरां विप्रयोगस्य विप्रयोगः सुदुःसहः॥ (श्रीमत्परमानन्दपादानाम्)

13. त्वदीयविरहग्रन्थे भारवत्तागताकुतः।
रागो विदितवेद्यानां कल्पते क्व भवादृशाम्॥ (श्रीकुलदीपशुक्लस्य कविवर्यस्य)

14. क. अङ्गैर्यदीदृशी कारा कारिता त्वत्कृते सखे।
अङ्गिनः प्रीतिपाशेन नूनं ते बन्धनं मतम्॥
(श्रीमताम् इच्छारामद्विवेदि–प्रणव–महाकवीनाम्)

ख. गात्रेषु रोमहर्षो निद्रापरिहाणिररुचिराहारे।
किं किं ज्वर आपतितो नहि नहि बलरामकवनमश्रौषम्॥ (श्रीमतां शङ्करराजारामाणाम्)

विप्रयोगविभावर्यां भगणो गण्यतेऽनिशम्।
नक्षत्राणामवस्थानं मत्तोऽवेहि न दैशिकात्॥

पञ्चतन्त्रकथा नास्ति वियोगरजनीकथा।
शतग्रन्थैर्नु जायेत तदेकाध्याययोजना॥

केवलं लोकमर्यादावशादस्त्यवगुण्ठनम्।
अन्यथा मुखचन्द्रोऽयं किं पटान्तेन वार्यते!॥

पादं वदति सा वाचा पादं तिर्यगपाङ्गकैः।
पादं मौनविधानेन पादस्तदपि शिष्यते ॥

प्रतिक्षणपरीणामप्रबुद्धमधुराकृतेः।
तत्प्रतीतिसमुत्पादे 'नार्थं शब्दाः स्पृशन्त्यपि'॥

माधुर्यौज्ज्वल्यपूतत्वजुषापि क्षीरधारया।
सलिले बद्धतृष्णस्य तृष्णा नैवोपशाम्यति॥

प्रेमाध्वनोऽध्वनीनत्वं न त्वं यासि यतस्तव।
वामदक्षिणयोर्वाम! विवेकोऽद्यापि विद्यते॥

एकस्यार्कस्य संपर्कः प्रतिहन्ति दृशोर्गतिम्।
अर्कबिम्बद्वयी तस्याः किं पुनर्हृदि संगता॥

एषा कस्य तनूजा हृदयकपाटद्वयं समुद्घाट्य।
चोरयति चित्तवित्तं कश्चिच्चैनां न वारयति॥

प्रतिकाण्डमग्निकाण्डं वृक्षलतानां भ्रमरसमितधूमम्।
कुर्वन्ननङ्गचौरोऽविचारितं वारणीयोऽसौ॥

---

15. यद्वागपाङ्गमौनादिव्यापारोल्लङ्घि सुभ्रुवः।
तत्तुरीयं भजे धाम कामस्य परमात्मनः॥ (श्रीमतां शङ्करराजारामाणाम्)

तदसाधि विनायासं स्मरेण यच्छङ्करेण तर्कशतैः।
मम सम्प्रति कान्ताया यत् पिण्डे तद्धि ब्रह्माण्डे॥

सर्वे भवन्तु सुखिनः सर्वे लोका निरामयाः सन्तु।
तव विरहे ज्वलदङ्गादृते मम प्रेमिणो हृदयात्॥

प्रागपि मालाकारात् प्रागपि वात्याः समीरणात् पूर्वम्।
कथमलिना संज्ञातं सन्नद्धा तारुणीकला कलिकाम्!॥

धात्रा यद्यपि रात्रिः संवेशायास्ति निर्मिता तन्वि!।
परमहमयं त्वया सह रात्रीरनिमेषमिच्छामि॥

# प्रकृतिः

कार्तिके सप्तपर्णानां सुगन्धैः सायमूह्यते।
"गजेन्द्रशालानङ्गस्य विशृङ्खलिततां गता" ॥

कोऽज्ञास्यद्गन्धसौभाग्यं गन्धवाहेऽवहत्यहो।
पुष्पाणां पारिजातानां प्रमदारण्यवासिनाम्॥

अभ्यर्थनाभिर्दम्पत्योः कयोः शीतं गतं गतम्।
पश्चात् पश्यदिवाभाति पुनरावृत्तकन्धरम्॥

शालानां प्रांशुता प्राणान्प्रापयत्युच्चतां कियत्॥
दरीणां चापि गाम्भीर्यं प्रकृतेरात्मनस्तलम्॥

कर्णाभ्यर्णे नसोऽग्रे वा नेत्रक्षेत्रे दधानि ते।
चम्पे मद्धस्तमायाते सर्वावयवसुन्दरि॥

अस्मिन्काले घनश्यामे सुधासारप्रवर्षिणि।
अर्जुनावयवाः स्थाने प्रस्फुटत्कलिकाङ्किताः॥

नीतं भीष्ममपि ग्रीष्मं विलोक्य त्वन्मुखं सुखम्।
सैव शीते समायाते प्रस्थिता कुत्र मल्लिके?॥

---

16. भवदीयरुचिरकविताकिशोरिकारिङ्गणाङ्गणताम्।
भजते नमोऽस्तु सहृदयकर्णद्वितयाय धन्याय॥ (श्रीमतां शङ्करराजारामाणाम्)

पूर्वं पलाशो विकसेद् मल्लिका चम्पकं ततः।
इत्थं वसन्तनृपतिः पुष्पपर्यायमादिशत्॥

सुवर्णगर्भा रूप्याभप्रान्ता माणिक्यमूलिका।
निधिवच्चीयते चम्पा वाटीषु मधुनाऽधुना॥

वसन्त! कलिकास्त्यक्त्वा या यातो यौवनोन्मुखीः।
कस्तत्पत्रेषु शुष्यन्तं रागं द्रष्टुं नियोजितः॥

विशत्यनुनिशं चन्द्रः शून्यादम्बुनिधेर्हृदि।
तरङ्गकोटिसंव्यक्तलक्षाधिकमनोरथे॥

# विभिन्नम्

त्वत्तो यथा मे गौराङ्गि! वीततृष्णमिदं मनः।
तथैव कश्चिच् श्यामाङ्गो नित्यं मामप्युपेक्षते॥

वर्धन्ते ग्रन्थयस्सूत्रे तव ब्राह्मण! नित्यशः।
दीर्घतोदात्तते तेऽपि ह्रसतो युगपत्तथा॥

(कुलकम्)
खेदितेष्वपि वेदेषु खण्डितास्वपि मूर्तिषु।
हतासु सौरभेयीषु प्रबद्धेष्वपि बन्धुषु॥
सत्सु सत्स्वपि यातेषु संहतेष्वपि दस्युषु।
गर्तीभूतासु गङ्गासु मृतासु यमुनास्वपि॥
दूषितेष्वपि तीर्थेषु परेतेष्वपि कर्मसु।
ब्राह्मणेष्वपि वित्तादिरोगरुग्णान्तरात्मसु॥
क्षत्रियेष्वपि दैन्यात्मभावक्लीबीकृतात्मसु।
निरर्थेष्वपि चार्येषु शूद्रेष्वकुशलेष्वपि॥
विष्णुगुप्तेषु गुप्तेषु राक्षसे राक्षसायिते।
चन्द्रगुप्तेषु सुप्तेषु म्लेच्छेष्वागतवत्स्वपि॥
वर्तते वर्तते किञ्चिद्येन भूते भविष्यति।
आसीदस्ति सदा लोके धर्मोऽस्माकं सनातनः॥

न नेत्रे न भ्रुवौ नैव विभ्रमो विनतभ्रुवाम्।
सुन्दराणि, ममैतेषु सुन्दरी भोगभावना॥

वादे जितस्य चार्वाक! मम बुद्धिर्दृढीकृता।
देवे ममाबलैस्तर्कैः सूक्ष्मे तिष्ठत्यसाधिते॥

सुतेनाचिरसूतेन क्षेत्रे ग्रामवधूरसौ।
राज्ञीव राजप्रासादे युवराजेन राजति॥

अन्तर्निहितबाष्पौघगोपने सुष्ठु सश्रमा।
नवोढेयमकाण्डेऽपि हसन्ती कं न रोदयेत्॥

स्पर्शमात्रफला ग्रन्थाः समयाभावतोऽधुना।
पुत्रवन्नेत्रहीनस्य सन्तीत्येव सुखं मम॥

यवनीमुखपद्मेभ्योऽधुना मधु निराकृतम्।
तथाप्येतान्यसह्यानि रघोरार्यस्य वंशजैः॥

रोचेतास्मा इति प्रेक्ष्य चित्रं पाकं करोत्यसौ।
मुग्धा माता न जानीते तत्पक्वमखिलं प्रियम्॥

त्वद्वार्तव्यग्रचित्तस्य पितरौ! सन्ध्ययोर्मम।
महामृत्युञ्जयत्वेन गायत्र्या परिणम्यते॥

भावाद्वैतं सदा कुर्यात् क्रियाद्वैतं न कुत्रचित्।
सत्यद्वैते क्रिया कुत्र यत्र द्वैतं भजेमहि॥

"उपमा कालिदासस्य" त्रिलोक्यां नैव विद्यते।
अस्मिन्नाभाणके कुत्र वदतास्त्यर्थगौरवम्॥

अधीयानेन शास्त्राणि शास्त्रमात्रमधीयते।
अधीयानेन चाम्नायं स्वस्यैवान्तरधीयते॥

अहो संस्कृतवैदुष्यं प्राकृतीं प्राप्य संगतिम्।
अपभ्रंशान्तरां नैव दशां गच्छति साम्प्रतम्॥

कौमारकुप्यमेतस्य नष्टमित्यवगत्य मे।
तातस्तारुण्यसमये सदयो नानुशास्ति माम्॥

प्रेमप्रसङ्गेऽपि गतं ब्राह्मण्यं हृदयान्न मे।
हृच्छयेऽपि च भावे तां शतायुष्ट्वाय शंसतः॥

सात्त्विका नैव कुर्वन्ति भूतकालस्य भोजनम्।
'यातयामं गतरसं पूति पर्युषितं हि तत्'॥

यदापतति केभ्यश्चित् स्वगुणानां प्रदर्शनम्।
तदा चेखिद्यते चेतो धर्षिता महिलेव मे॥

भविष्योऽनुजनिष्यन्नो पराम्बागर्भसंस्थितः।
सोत्कण्ठबालैरस्माभिः स परामृश्यतेतराम्॥

क्व पतञ्जलिशाला सा क्व वात्स्यायनचट्टकम्।
हा तीर्थध्वाङ्क्षमनसोऽवतप्तेनकुलस्थितम्॥

संस्कृतं पारसीकं च वाग्देव्या नयनद्वयम्।
धन्योऽहमुभयेनापि सानुकम्पं कटाक्षितः॥

श्रीवत्साङ्कानुभावेन चण्डरश्मिप्रभायतिः।
पुरीवासववासाभा दृष्टाऽवन्ती शिवान्विता॥

नवतारुण्यधन्यानामङ्गानामनुचिन्तया।
शनैर्वार्धक्यदौर्बल्यं ममाङ्गेषूपसर्पति॥

स्वकीयप्रेमसिन्दूरैर्मत्सीमन्तं विभूषय।
सीमन्तिनीति मां सर्वो नतनेत्रोऽवलोकयेत्॥

त्वामवाप्य प्रिये तद्वत् प्रसन्नहृदयोऽस्म्यहम्।
यथा काचित् प्रिया प्राप्य प्रेयांसं हृदयानुगम्॥

त्वन्मनाः परिणीताया उद्विजेऽहं तथा यथा।
सपत्न्यैषा ममैवास्तु व्यथमानमना इति॥

हिन्दुरस्म्यन्यधर्मेषु हिन्दुषु ब्राह्मणस्तथा।
ब्राह्मणेष्वप्यहं कश्चिदद्धा कोऽस्मीत्यनिर्णयः॥

गतसारं निराधारं चिन्तामात्रेण सञ्चितम्।
समानं वर्तमानं मे वृत्तवर्तिष्यमाणयोः॥

कोऽत्राधिक्षिप्यतां ब्रूहि गुर्जरैर्बन्धुभिर्यदि।
कृतज्ञोस्मीति वक्तव्ये कृतघ्नोऽस्मीति भासते।

नवरात्रेऽल्पमाढ्ये या सर्वरात्रेऽतिनिर्धने।
नमस्तस्यै नमस्तस्यै क्षुधारूपेण संस्थिता॥

पुराणपुरुषायापि लक्ष्मीयुक्ताय कास्त्ज्ञति।
किशोरी अपि मे बुद्धिश्चिरमानन्दमेधितुम् ॥

स्त्रियो देहात्ममानिन्यो मा भूवन् दुःखिता इति।
सूचयामि न ता मह्यमरोचन्त मनागपि॥

दाहितस्त्रासहोलायां हिरण्यकशिपुप्रभैः।
प्रेमप्रह्लाद ईशस्य प्रभावेण नवायते॥

तिन्दुकालातसंकाशं मुहूर्तं दीपिताङ्गकम्।
यौवनं ग्रामकन्यानां भस्मान्तं दुःखयत्यलम्॥

पञ्चत्वं यान्तु कुण्डल्यां नवाप्युच्चावचा ग्रहाः।
विभ्राजते मनश्शून्य आत्मसूर्यः समुद्गतः॥

प्रत्यहं पद्मिनीशस्य प्रातर्जागरणे पणे।
जितस्य वर्णिभिर्वर्णं लज्जया लोहितायति॥

चिरं जीवतु मे तातो योऽध्यापकमशान् मम।
"प्रेमातिरिच्य मत्पुत्रं माध्यापयत किञ्चन"॥
सिद्धार्थतैलदुर्गन्धिः सिद्ध्यै ध्यातो हतात्मभिः।
देवो विजृम्भते कश्चिन्नवोऽनुशनिवासरम्॥

नागरेभांश्च महिषीः स्वार्थान्धान् वशमानयन्।
जालवत् पूज्यते साँईं कोऽप्यज्ञातकुलः कलौ॥

अन्तर्वत्नी हि मे पत्नी ताम्रगण्डा विराजते।
प्राची गर्भगतार्केव सर्वतोऽरुणिमार्चिता॥

पङ्कजाकारकरयोः पङ्कजे लसतः श्रियः।
आधाराधेययोर्भेदस्तार्किको द्विर्निरस्यते॥

गगनग्रहचक्रस्य दैवज्ञः सन् वशेऽभवम्।
ममाधुना सगगना ग्रहा वेदान्तिनो वशे॥

अषण्ढीकृत्य वृषभं सीरिणोऽपि न युञ्जते।
अकृत्वाऽवासनं वेधा मामेव गृहिणं व्यधात्॥

प्रतिपादयते चारु भावमद्वैतसंगतम्।
कान्तादन्तच्छदद्वन्द्वमिव वेदान्तयोर्द्वयम्॥

चुम्बावचेयमाश्चर्यं पुष्पितं वदने तव।
कणास्तस्यावलिप्यन्ते चुम्बतोऽपि पितुर्मुखे॥

अहं च मम पुत्री च ग्रन्थानां रसिकावुभौ।
यथा मे पठने प्रीतिस्तथास्याः पाटने रुचिः॥
पर्याप्ता मधुरा सान्द्रा सुवर्णा सुनिरन्तरा।
मधुधा मधुधारेव रसिकै रस्यतामलम्॥[17]

17. संस्कृतविभागदिल्लीविश्वविद्यालयेन प्रकाश्यमानायै पत्रिकायै रचितं पद्यम्।

संस्कृतं पारसीकं च वाग्देव्या नयनद्वयम् ।[18]
धन्योऽहमुभयेनापि सानुकम्पं कटाक्षितः ॥

कथं न पारसीं मन्ये प्राणैरपि धनैरपि ।
मया वर्णाश्रमं धर्मं पणीकृत्यापि शिक्षिताम्॥

संस्कृतादपि गुर्वर्थो मधुरः प्राकृतादपि ।
प्रियश्च मातृभाषायाः पुत्र्या आद्यवचःक्रमः॥

कश्चिद् विकचसरोजं प्रोद्यद्गन्धं यदालिरायातः ।
कथमथ तदैव रविणा किरणालिः संहृता हन्त!॥

इन्द्रियदूषणकर्मणि विरमति रसना न शिष्यवर्गेऽस्य ।
संयममाचार्यस्य तु सा गृहदासी विजानाति॥

कविकुलगुरुणैतिह्यं कवित्वशक्त्या तथान्यथितम् ।
सर्वोऽद्यत्वे कथयति "शकुन्तला कालिदासस्य"॥

कपिलं कर्दमजातं निर्लिप्ताङ्गं प्रसन्नतनुम् ।
दृष्ट्वा प्रतीयते किल "कर्दमतो जायते कमलम्"॥

❑ ❑ ❑

---

18. क. केवलं संस्कृताक्ष्णा मां कटाक्षयति भारती ।
अलम्मन्ये ममाप्येतत् न मयेष्टा विदेशवाक् ॥ (जी. शङ्करनारायणवर्यस्य)
ख. प्रसन्ना संस्कृता हृद्या जनन्यैव सरस्वती ।
पारसीका तु धात्री स्यादल्पकालप्रसादिनी । (नारायणन् एप्पुरातवर्यस्य)
ग. नयनयोस्तु वैषम्यं यदि स्वल्पं विलक्ष्यते ।
सरूपमपि किं वस्तु याति नैव कुरूपताम ॥
मन्ये संस्कृतात् सर्वा यदि भाषा विनिर्गताः ।
कारणकार्यरूपेण साम्यं भवति निश्चितम् ॥ (अरविन्दकुमारतिवारीमहाभागस्य)

युवसाहित्यकारस्य प्रथमपुस्तकप्रकाशनयोजनायां सुकवेः बलरामशुक्लस्य प्रथमं काव्यसङ्कलनं **परीवाहनाम** साहित्य अकादेमी प्रकाशयति। अस्य कवेः काव्यं संस्कृते अभिनवं कमपि रचनासंसारं समुन्मीलयति। संस्कृतक्षेत्रे कवयितृषु विरला एव सन्ति पुण्यभाजो ये शब्दसामर्थ्येनार्थगौरवेण च साहित्यं विशेषयन्ति। एतादृशेषु अङ्गुल्यग्रगणनार्हेषु सुकविषु अग्रतामेति युवाऽप्यधीयानः सुविरचिताभिनवरीतिवितानः अमन्दरसझरीसन्तानः कविर्बलरामः। अस्य रचनावचनावलीषु वक्रोक्तयः औचित्येन समन्विता अहमहमिकया परापतन्ति। कल्पना अनल्पलावण्यं किरन्ती नरीनर्ति। अयं हि शृङ्गारस्यापि शृङ्गारम् अलङ्काराणामप्यलङ्कारं कवितावनितायाः कृते विरचयति। यतिलयगतिपुरःसृतानि च्छन्दांसि अस्य काव्यरङ्गे नरीनृतति चमत्कृतिं च कामपि तन्वन्ति। आशास्महे यत् अनितरसाधारणैर्गुणैर्विभूषितः सदर्थरत्नमण्डितः काव्यमुक्तासङ्ग्रहोऽयं बलरामेण गुम्फितः सहृदयानां कण्ठहारायेतेति।

**बलरामशुक्लस्य** जन्म 25 सितम्बर 1981 तमे वर्षे गोरखपुरमण्डलान्तर्गते महराजगंजजनपदे सोहरौनाराजानाम्नि ग्रामे समभूत्। माध्यमिकीः शिक्षा ग्राम एव परिसमाप्य गोरखपुरविश्वविद्यालयतः अनेन बी. ए. परीक्षा समुत्तीर्णा। दिल्लीविश्वविद्यालयतः एतेन संस्कृतपारसीकभाषयोः एम. ए. परीक्षे समुत्तीर्णे। उभयत्रापि च सुवर्णपदकं लब्धम्। दिल्लीविश्वविद्यालयत एव व्याकरणभाषाविज्ञानविषये पीएच. डी. उपाधिः अनेन समधिगतः। एतस्य पुस्तकद्वयं-'भारतीय एवं पाश्चात्त्य वाक्यार्थ', 'आधुनिक संस्कृत साहित्य संचयन, इत्याख्यं प्रकाशतां गतम्। अनेके च हिन्दीसंस्कृतपारसीकभाषासु शोधलेखास्तत्र तत्र प्रस्तुताः प्रकाशिताश्च। अखिलभारतस्तरीयमंचेषु बहुशः काव्यपाठार्थमयमाहूतः। ईरानदेशं भूयः प्रवसता चानेन तत्रायोजिते अखिलविश्वकविसम्मेलने भारतस्य प्रातिनिध्यं विहितम्। पारसीकादिभाषाभ्योऽनेन भूयस्यः कविताः संस्कृतेऽनूदिताः। भारतस्य राष्ट्रपतिना एष 2013 तमवर्षे युवसंस्कृतविद्वद्रूपेण महर्षिबादरायण-व्याससम्मानेन सभाजितः। सम्प्रति चैष दिल्लीविश्वविद्यालयस्य संस्कृतविभागे सहायकाचार्यपदे तिष्ठन् सुरभारतीं सेवते।

आवरण चित्र : हेमंत राव




साहित्य अकादेमी


ISBN : 978-81-260- 4787-1


₹200/-